

**चन्दमामा** सम्पुटः - २१ अक्टोबर् - २००५ सञ्चिका - १०



# अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः


















**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, **CHENNAI - 600 097**
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १४४/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399
Fax: 044-22312447, Mobile: 98412-77347
email : advertisements @ chandamama.org
**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184
Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



संस्थापकौ -
**चक्रपाणिः, बि. नागिरेड्डिः च**

# जगतः हिताय ...

अक्टोबर्मासे २४ दिनाङ्के संयुक्तराष्ट्रसङ्घदिनम् आचर्यते । एतस्मिन् एव मासे अन्यानि कानिचन जागतिकजनताहितपोषकाणि दिनानि अपि आचर्यन्ते । तानि - अन्ताराष्ट्रियं वृद्धदिनम् (प्रथमे दिनाङ्के), जागतिकम् आहारदिनम् (षोडशे दिनाङ्के), दारिद्र्यनिवारणदिनम् (सप्तदशे दिनाङ्के) इत्यादीनि ।

प्रथमजागतिकयुद्धस्य (१९१४ - १९१८) अनन्तरं राष्ट्राणां सङ्घटनस्य (लीग् आफ् नेषन्स्) कल्पना उद्भूता । राष्ट्राणां मध्ये उत्पद्यमानानां विवादानां निवारणाय, युद्धसम्भावनायाः अपसारणाय, शान्तेः स्थापनाय च एतादृशं सङ्घटनं रचनीयम् इति चिन्तनं तदा उत्पन्नम् । तथापि ततः दशकद्वयाभ्यन्तरे एव द्वितीयं जागतिकं युद्धं प्रवृत्तम् । लक्षशः सैनिकाः रणरङ्गे प्राणवियोगं प्राप्तवन्तः । कोटिशः जनाः युद्धस्य विविधान् दुष्परिणामान् अनुभूतवन्तः च ।

एतदनन्तरं 'लीग् आफ् नेषन्स्' एव संयुक्तराष्ट्रसङ्घस्य उदयस्य कारणं जातम् । पुनरपि जनजीवनघातकं जागतिकयुद्धं यथा न प्रचलेत् तथा करणम् एतस्य लक्ष्यम् आसीत् । सं.रा.सङ्घस्य प्रार्थना तु एका एव - जनानां हितं सिद्ध्येत्, शान्तिमयस्य उदर्कस्य आशा छिन्नमूला न भवेत् च इति । एतादृश्याः स्थितेः रक्षणं प्राधान्येन एतस्मिन् जगति वसतां जनानां चिन्तनम् एव अवलम्बते ।

एतस्मिन् अवसरे शान्तेः आराधकस्य महात्मनः गान्धेः वचनानि वयं स्मराम, यस्य जयन्ती अक्टोबर्मासस्य द्वितीये दिनाङ्के आचर्यते । सः वदति - 'अन्धकारमये जगति प्रकाशः अपि अस्ति इति आशा मानवेन आदौ स्थापनीया । मार्गप्राप्तिपर्यन्तं तेन धैर्यच्युतेन न भवितव्यम् । प्रकाशः सर्वेण अपि प्राप्तुं शक्यः । सः यदा प्राप्यते तदा मार्गः स्वयं दृष्टिगोचरः भवति' इति ।

सम्पादकः - **विश्वम्**





## वाचकानां कृते कथास्पर्धा - परिणामः (मार्च् - ०५)

# योग्यम् उपायनम्



मन्त्रिमहोदयः मोहनसिंहेन सह वार्तालापं कृत्वा ज्ञातवान् यत् मोहनसिंहः चन्दनसिंहस्य प्रतिवेशी अस्ति, सः महाधनिकः सन् अपि नितरां कृपणः अस्ति इति ।

'कलिङ्गफलदानस्य निमित्तं राजा चन्दनसिंहाय शतं सुवर्णनाणकानि दत्तवान् यत् ततः लोभं प्राप्तवान् एषः महत् वस्तु दत्तं चेत् सहस्रं सुवर्णनाणकानि वा प्राप्येरन् इति चिन्तयन् कलभम् एव उपायनरूपेण यच्छन् अस्ति । एषः पुरस्काराार्हः सर्वथा न' इति चिन्तयित्वा मन्त्री राजानम् अवदत् - ''महाराज ! एतस्य उपहारः मूल्यवान् एव अस्ति । अतः यथायोग्यं मूल्यवत् उपायनम् एव अर्हति एषः'' इति ।

मन्त्रिणः वचनस्य आन्तर्यं ज्ञातवान् राजा - ''मन्त्रिवर्य ! भवतः संसूचना उत्तमा एव अस्ति'' इति मन्त्रिणम् उक्त्वा पुनः मोहनसिंहम् उद्दिश्य - ''मोहनसिंहमहोदय ! भवान् महाधनिकः । भवते उपायनरूपेण धनस्य दानम् अनौचित्याय भवेत् इति भावयामः वयम् । वस्तुरूपेण उपायनदानम् एव वरं स्यात् इति अस्माकम् आशयः । दिनद्वयात् पूर्वम् अपूर्वोपायनरूपेण एकं महाकारकं कलिङ्गफलं प्राप्तम् अस्ति अस्माभिः । तदेव वयं भवते दद्मः । कृपया स्वीक्रियताम्'' इति उक्त्वा कलिङ्गफलम् आनाय्य दापितवान् ।

राज्ञः अप्रियतां प्राप्तुम् अनिच्छन् मोहनसिंहः तत् मौनेन स्वीकृत्य विना वचनं ततः निर्गतवान् ।

**कु ।। कृत्तिका रवि इनवळिळ**
८/२, सचिन सङ्कुल, मिठाघर् मार्ग,
मुलुन्द (पूर्व) **मुम्बयी - ४०० ०८१**(महाराष्ट्रम्)



# बुद्धिमान् शिवलालः

लक्ष्मीपुरनामके ग्रामे कश्चन कृपणः भूस्वामी आसीत्। शिवलालः तस्य सहायकः । शिवलालेन क्षेत्रसम्बन्धीनि कार्याणि तु करणीयानि आसन् एव । तेनैव सह गृहनिमित्तं वस्तूनि आनेतुं नगरम् अपि गन्तव्यं भवति स्म । अतः आदिनं निरन्तरं कार्यं करणीयं भवति स्म तेन ।

ग्रामीणाः शिवलालं बुद्धिमन्तं व्यवहार-चतुरं च मन्यन्ते स्म, तं बहुधा प्रशंसन्ति स्म च । स्वप्रशंसां श्रुत्वा शिवलालः - ''भवन्तः मां बहुधा प्रशंसन्ति । मयि तादृशी योग्यता नास्ति इत्येव मम अभिप्रायः । यदि भवतां वचनेषु सत्यांशः स्यात् तर्हि मम जीवने अभिवृद्धिः स्यात् । किन्तु अहं कष्टमयं जीवनम् एव यापयन् अस्मि । कापि उन्नतिः न अभवत् मम । भूस्वामिना दीयमानेन अल्पेन एव वेतनेन उदरं पूरयन् अस्मि । परिश्रमस्तु महान् एव क्रियते मया'' इति ।

भूस्वामिनः समीपे चत्वारि वृषभयुगलानि आसन् । तेषु एकं युगलं जरया आक्रान्तम् । अतः तेन युगलेन क्षेत्रकर्षणं, यानकर्षणं वा कर्तुं न शक्यम् आसीत् । तस्मात् भूस्वामिना चिन्तितं यत् अन्यदेकं वृषभयुगलं क्रयणीयम् इति । तदर्थं सः अष्टादशवर्षीयेण पुत्रेण अर्जुनेन, सहायकेन शिवलालेन च सह मङ्गलवासरे सम्पद्यमानं पशूनां क्रयविक्रयण-कार्यक्रमं प्रति प्रस्थितः ।

विपण्यां सर्वत्रापि धेनूनां वृषभाणां च समूहः एव परिदृश्यते स्म । तेषु उत्तमजातीयकं तरुणवयसि स्थितं वृषभयुगलं पुत्रस्य सहायकस्य च सूचनानुगुणं क्रीत्वा गृहं प्रति आगतवान् भूस्वामी ।

वृष्टिकालः आसन्नः इत्यतः पुत्रः अर्जुनः यानकर्षणे क्षेत्रकर्षणे च तयोः वृषभयोः शिक्षणं दातुम् उद्युक्तः ।

तथाविधम् अर्जुनं दृष्ट्वा शिवलालः उक्त-वान् - ''स्वामिन् ! एतौ वृषभौ यौवनमदेन युक्तौ । भवान् अपि तारुण्ये अस्ति । अतः

किञ्चित् जागरूकेण भवितव्यं भवता'' इति ।

सप्ताहद्वयम् अतीतम् । एकस्मिन् दिने प्रातरेव अर्जुनः नूतनौ तौ वृषभौ याने संयोज्य गृहं प्रति प्रस्थितः । आगमनमार्गः क्षेत्रयोः मध्ये आसीत् । मार्गे आगमनसमये अकस्मात् तौ वृषभौ भीतौ । अतः पुरतः आगच्छन्तं शिवलालं पातयित्वा तौ अग्रे गतौ । तेन शिवलालस्य व्रणः तु कोऽपि न जातः, किन्तु पतनसमये जातेन आघातेन सः दिग्भ्रान्तः । हस्तपादौ प्रसार्य महत्या वेदनया सः चीत्कृतवान् ।

ग्रामीणाः तदवस्थं तं दृष्ट्वा दयया अर्जुनस्य साहाय्येन तं तदीयं गृहं प्रापितवन्तः । गृहप्राप्त्यनन्तरम् अपि शिवलालः क्रन्दनं कुर्वन् एव आसीत् । तस्य एतादृशीम् अवस्थां दृष्ट्वा ग्रामीणाः निश्चितवन्तः यत् एतेन कानिचन दिनानि विश्रान्तिः स्वीकरणीया इति । अतः ते सर्वे भूस्वामिनं दृष्ट्वा उक्तवन्तः - ''भवतः सहायकः शिवलालः इदानीं विषमस्थितौ अस्ति । तस्य साहाय्यदानं भवतः कर्तव्यम्'' इति ।

तदा भूस्वामिनः मनसि विचारः उत्पन्नः - 'यदि अहं मम सहायकस्य योगक्षेमं न पश्येयं तर्हि ग्रामे मम अपकीर्तिः प्रसृता स्यात्' इति । अतः झटिति सः शिवलालस्य गृहं गत्वा तस्य पत्न्याः हस्ते सहस्रं रूप्यकाणि दत्त्वा उक्तवान् - ''मम पुत्रस्य अजागरूकतया एवं सम्पन्नम् । एषः स्वस्थः भवतु । अग्रे अहम् एतं सुकरेषु एव कार्येषु नियोक्ष्यामि । अलं चिन्तया'' इति ।

भूस्वामिनः दयागुणं दृष्ट्वा शिवलालस्य पत्नी सन्तुष्टा । अतः भूस्वामिनः गमनानन्तरं सा पतिम् उक्तवती - ''पश्यतु, भवतः स्वामी नितरां दयालुः अस्ति । अतः भवान् एतत् अनारोग्यनाटकं त्यक्त्वा पुनः भूस्वामिनः गृहकार्ये निरतः भवतु'' इति ।

तदा शिवलालः हसन् उक्तवान् - ''अहम् इदानीम् एव चलितुं शक्नोमि इति यदि ग्रामीणाः जानीयुः तर्हि ते मां महावञ्चकं भावयेयुः । अतः मासं यावत् मया विश्रान्तिः स्वीकरणीया एव । एतावत्पर्यन्तं भूस्वामी मां श्रमयुक्ते कार्ये नियोज्य मत्तः अधिकानि कार्याणि कारितवान् । अतः पूर्वं कृतस्य कार्यस्य वेतनं मया कृपणात् भूस्वामितः सवृद्धि स्वीकरिष्यते एतदवसरे । गच्छतु भवती । अहं सर्वं सम्यक् एव निर्वक्ष्यामि'' इति ।





# कासारवासिनी पिशाची

प्रतिगृहम् आगत्य सप्ताहाभ्यन्तरे एव कमला ज्ञातवती यत् मम पतिः रमेशः अलस-चक्रवर्ती एव अस्ति इति । कृष्यादिकार्यं तु षष्टिवर्षीयः श्वशुरः एव निर्वहति स्म ।

प्रतिदिनं रमेशः विलम्बेन उत्तिष्ठति । भोजनं समाप्य गृहात् निर्गत्य सायङ्काले प्रत्यागत्य भुक्त्वा सुखेन स्वपिति ।

पत्युः एतं व्यवहारम् असहमाना कमला कदाचित् पतिम् अवदत् – ''श्वशुरः वृद्धः जातः अस्ति । अतः कृष्यादिकार्यं भवान् निर्वहतु । सः सुखेन दिनानि यापयतु नाम'' इति ।

एतत् श्रुत्वा रमेशः उच्चैः हसन् अवदत् – ''भवत्याः आगमनस्य अनन्तरं तेन पाकादिकं करणीयं नास्ति । अतः पूर्वं यावत् सुखम् आसीत् ततोऽपि अधिकेन सुखेन अस्ति सः इदानीम्'' इति ।

एतं किमपि वदामि चेत् न किमपि प्रयोजनम् इति चिन्तयित्वा कमला कदाचित् कृषिक्षेत्रं गच्छन्तं श्वशुरम् अवदत् – ''आत्मना सह पुत्रमपि नयतु आर्य ! इतोऽपि कति दिनानि एवं परिश्राम्येत् भवान् ?'' इति ।

तदा श्वशुरः – ''बाल्ये एव सः मातृवियोगं प्राप्तवान् । ततः आरभ्य मया प्रेम्णा पालितः सः । कृषौ तस्य प्रवृत्तिम् अहम् एव न सहे । सुखेन स्वपितु नाम सः'' इति उक्त्वा तः निर्गतवान् ।

तस्मिन् एव दिने रात्रौ सर्पदंशनात् श्वशुरः दिवं गतः । ततः सप्ताहः अतीतः चेदपि रमेशस्य व्यवहारे तु किमपि परिवर्तनं न जातम् ।

कदाचित् भोजनं परिवेषयन्ती कमला पतिम् अवदत् – ''इदानीम् अपि कृष्यादिकार्यं भवता यदि न निरुह्येत तर्हि जीवनं कथं प्रचलेत् ? सर्वेऽपि बीजावापं समापितवन्तः सन्ति'' इति ।

''श्रमसाध्यं तत् कृषिकार्यम् इतःपरं मम पुरतः न प्रस्तौतु भवती'' इति असन्तोषेण अवदत् रमेशः ।



''एवं तर्हि गृहव्यवहारः कथं निरूढः स्यात् ? भवता स्वस्य एषः व्यवहारः परिष्करणीयः एव'' इति अवदत् कमला ।

''अहं कमपि परिष्कारं न इच्छामि । गृहव्यवहारं भवती स्वयमेव चिन्तयतु'' इति उक्त्वा भोजनं समाप्य अटनाय निर्गतवान् रमेशः ।

पत्युः व्यवहारे परिष्कारः कथं करणीयः इति न ज्ञातं कमलया । गृहसमस्याम् एव चिन्तयन्ती सा रात्रिपाकम् अपि न कृतवती एव । अन्धकारप्रसारानन्तरं गृहम् आगतः रमेशः अवदत् - ''महती बुभुक्षा मम । परिवेषयतु तावत्'' इति ।

एतत् श्रुत्वा कमला क्रोधेन - ''भवता कृषिकार्यं निराकृतम् इत्यतः मया पाकः अपि न कृतः अद्य । भवता कृषिकार्यम् अङ्गीकृतं चेदेव मया अपि पाकः करिष्यते'' इति अवदत् ।

किञ्चित्कालं मौनेन अतिष्ठत् रमेशः । अन्ते क्रोधम् असहमानः सः गृहात् वेगेन निरगच्छत् । कुत्र गम्यते इति सः स्वयमेव न जानाति स्म ।

सः अरण्ये कस्यचित् कासारस्य समीपम् अगच्छत् । सरोवरतीरे वटादयः बहवः वृक्षाः आसन् ।

'मदीयम् एव कृषिक्षेत्रम् अस्ति । तथापि मया अकिञ्चनेन इव बुभुक्षितेन भवितव्यम् अभवत् । धिक् एतादृशं जीवनम्' इति चिन्तयन् सः अग्रे गच्छन् आसीत् । तावता वृक्षमूलेन तदीयः पादः घट्टितः अभवत् । अतः सः कासारे अपतत् ।

अनन्तरक्षणे एव वटवृक्षस्य काचित् जटा तस्य पुरतः उपस्थिता । तस्याः साहाय्येन सः तीरं प्राप्तवान् ।

तीरम् आगतवन्तं तं काचित् पिशाची अवदत् - ''किमर्थं मरणाय प्रयासः क्रियते भवता ? यदि मया वटस्य जटा क्षिप्ता न स्यात् तर्हि भवान् मरणं प्राप्तवान् स्यात्'' इति ।

पिशाचीं दृष्टवतः रमेशस्य मुखं कान्तिहीनं जातम् । भीतः सः यावत् किमपि वक्तुम् उद्युक्तः तावता पिशाची एव पुनः अवदत् - ''किमपि उत्तमं कार्यं कृतं चेत् सद्गतिः प्राप्येत इति चिन्तयन्ती अहं भगवन्तं तदर्थं प्रार्थयन्ती आसम् । भवता मध्ये विघ्नः उत्पादितः'' इति ।

पिशाच्याः व्यवहारात् रमेशः अवगतवान्

यत् एषा साधुस्वभावा इति । अतः सः ताम् उद्दिश्य – ''मां रक्षन्त्या भवत्या साधु कृतम् । किन्तु अहम् अकिञ्चनः अस्मि । पत्न्याः पोषणं कर्तुम् अपि मम अर्थसामर्थ्यं नास्ति'' इति वदन् कासारे पतनाय प्रयासम् अकरोत् अभिनयेन ।

''एवं न करणीयं भवता'' इति वदन्ती पिशाची वृक्षम् आरुह्य धनग्रन्थिं कञ्चित् आनीय रमेशाय दत्तवती ।

''मम जीवनस्य कश्चन आधारः कल्पितः भवत्या । भवत्याः सद्गतिं प्रार्थयिष्यामः वयम्'' इति उक्त्वा सन्तोषेण ततः निर्गतवान् रमेशः ।

गृहं प्राप्य धनग्रन्थिं पत्न्याः पुरतः क्षिप्त्वा सः अवदत् – ''भोः, पश्यतु मम सामर्थ्यम् । क्षणाभ्यन्तरे एव धनम् आनेतुम् अपि अहं समर्थः अस्मि एव । नाहम् अस्मि सामान्यः'' इति ।

धनस्य प्राप्त्या कमला सन्तुष्टा । रमेशः किञ्चित् धनं स्वीकृत्य गृहात् निर्गत्य द्यूते प्रवृत्तः अभवत् । सायङ्कालाभ्यन्तरे एव सः धनहीनः जातः ।

सायं यदा सः गृहं प्रत्यागतः तदा कमला अवदत् - ''एवं धनं व्यर्थीक्रियते चेत् गृहस्य व्ययस्य भारः कथं निरुह्येत ? यदि कृषौ भवतः आसक्तिः नास्ति तर्हि वाणिज्यम् आरभ्यताम्'' इति ।

''मया किं करणीयम् इति केनापि उपदेष्टव्यं नास्ति । यथा रोचते तथा करिष्यामि अहम्'' इति कठोरस्वरेण उच्चैः अवदत् रमेशः ।



पिशाच्या दत्तं धनं समग्रं मासाभ्यन्तरे तेन व्ययितम् । यदा रिक्तहस्तता प्राप्ता तदा पुनरपि सः अरण्यस्थस्य कासारस्य समीपं गत्वा कासारे पतनम् अभिनयन् पिशाचीतः धनं प्राप्य गृहं प्रत्यागतः । धनसहिततया आगतं पतिम् आश्चर्येण दृष्टवती कमला ।

रमेशस्य दुरभ्यासाः प्रवृद्धाः । अतः पक्षाभ्यन्तरे एव तदीयं सर्वं धनं विनष्टम् । एतस्य तर्जनेन न किमपि प्रयोजनम् इति जानती कमला क्षीणस्वरेण पतिम् अवदत् – ''गृहे वराटिकामात्रम् अपि धनं नास्ति । किम् इदानीं क्रियेत मया ?'' इति ।

तस्यां रात्रौ रमेशः पुनरपि कासारं प्रति प्रस्थितः । 'एतस्य अनुसरणं कृत्वा धनस्य मूलं ज्ञातव्यम्' इति चिन्तयन्ती कमला रमेशम् अनुसृत्य अरण्यं प्रति गतवती ।

अरण्ये कस्यचित् वृक्षस्य पृष्ठतः निलीय स्थित्वा पिशाचीतः रमेशेन धनं यत् प्राप्तं तत् समग्रतया अपश्यत् सा ।

रमेशः धनं स्वीकृत्य यदा ततः प्रस्थितः तदा कमला अपि कासारे पतनस्य अभिनयं कृतवती ।

एतत् दृष्ट्वा आगता पिशाची अपृच्छत् - "किमर्थं भवती कासारे पतनाय उद्युक्ता ? का विपत्तिः भवत्याः ?" इति ।

"मम विपत्तेः मूलं भवती एव" इति अवदत् कमला ।

"तत् कथं सम्भवेत् ? मया किं वा कृतम् ?" इति अपृच्छत् पिशाची ।

"भवत्याः कारणतः मम पतिः परमालसः दुर्व्यसनग्रस्तः च जातः अस्ति । अयोग्याय धनस्य दानं सर्वथा अनुचितम् । पापकरं कृत्यम् एतत् । किम् एतदपि न जानाति भवती ?" इति अवदत् कमला ।

"असहायस्य उपकारेण पुण्यं प्राप्यते इति मया चिन्तितम् आसीत् । पापसम्भावना तु इदानीम् एव ज्ञाता । एतस्य निवारणाय मया किं वा करणीयम् ?" इति विषादेन अपृच्छत् पिशाची ।

तदा पार्वती पत्युः कृत्रिमव्यवहारं विस्तरेण निवेद्य, सः पुनरपि यदि आगच्छेत् तर्हि किं किं करणीयम् इति संसूच्य ततः गृहं प्रति निर्गतवती ।

पञ्चदशदिनाभ्यन्तरे रमेशः पुनरपि रिक्तहस्तः जातः । अतः रात्रौ कासारतीरम् आगत्य यथापूर्वं कासारे पतनस्य अभिनयम् अकरोत् ।

तदा तत्र आगता पिशाची उच्चैः हसन्ती - "भोः, भवतः सर्वोऽपि कृत्रिमव्यवहारः मया ज्ञातः अस्ति । परिश्रमं सर्वथा अकुर्वन् दुर्व्यसनानां दासतां गतः भवान् महापापी । आत्महत्याभिनयकर्त्रा भवता पिशाचजन्म एव प्राप्येत । भवान् पिशाचः भूत्वा एतस्मिन् वृक्षे वसतु" इति उक्त्वा ततः क्षणाभ्यन्तरे अदृश्यतां गता ।

पिशाच्याः कथनं श्रुत्वा रमेशः नितरां भीतः ।

अनन्तरदिने हलं गृहीत्वा कृषिक्षेत्रं गच्छन्तं पतिं दृष्ट्वा कमला सन्तुष्टा जाता । सा कासारपिशाच्यै मनसा एव सश्रद्धं कृतज्ञतां समर्पितवती ।





# भल्लूकमान्त्रिकः

## २२

*[सामन्तः सूर्यभूपतिः स्वस्य दुर्गस्य रक्षणाय निर्गतवान् । मायामर्कटः अपि शङ्खनादं श्रुत्वा दुर्गभित्तिम् उल्लङ्घ्य वेगेन निर्गतवान् । भल्लूकमान्त्रिकः स्वस्य गुरोः अपायस्थितिं ज्ञात्वा सुरङ्गमार्गं यावत् प्रविशन् आसीत् तावता बधकभल्लूकः अग्रे आगत्य तस्य अवरोधं कृतवान् । भल्लूकमान्त्रिकः तं नगरवधकं कर्तुं मन्त्रदण्डेन स्पृष्टवान्, ततः निर्गतवान् च । तदनन्तरम् ...]*

भल्लूकमान्त्रिकस्य निर्गमनस्य अनन्तरं राजा जितकेतुः कालीवर्माणं पश्यन् उक्तवान्– ''मया भवतः पुरतः एव घोषितम् अस्ति यत् सूर्यभूपतेः पुत्री मम दत्तकपुत्री भविष्यति इति । इदानीं सा रक्षणीया खलु अस्माभिः मायामर्कटस्य गुरोः मिथ्यामिश्रतः ? किं वयं सैनिकैः सह अरण्यं प्रति गच्छाम ?'' इति ।

''यदि वयं सैनिकैः सह गच्छेम तर्हि महान् कोलाहलः कश्चन स्यात् एव । तदा तान्त्रिकः अस्माकम् आगमनं विनायासं जानीयात्'' इति अवदत् कालीवर्मा ।

ततः कालीवर्मा वधकः उग्रदण्डः च अरण्यं प्रति प्रस्थितवन्तः पादाभ्याम् । तैः अरण्ये कश्चन भल्लूकः दृष्टः । सः कन्दमूलफलादीनि वन्यलतया बद्ध्वा स्कन्धे आरोप्य



अरण्यं प्रति गच्छन् आसीत् ।

कालीवर्मा तं दर्शयन् उग्रदण्डम् अवदत् - ''उग्रदण्ड ! अहो, अपूर्वं दृश्यम् एतत्'' इति ।

''अत्र आश्चर्यकरं किम् अस्ति ? सः तान्त्रिकेण मिथ्यामिश्रेण पालितः भल्लूकः स्यात् । यदि वयं विना शब्दं तम् अनुसरेम तर्हि तान्त्रिकः कुत्र अस्ति इति विषयः विना क्लेशं ज्ञायेत अस्माभिः'' इति अवदत् उग्रदण्डः ।

ततः ते तं भल्लूकम् अनुसरन्तः अग्रे गतवन्तः । तत्र तैः कस्यचित् वृक्षस्य अधः भल्लूकमान्त्रिकः, श्वेतश्मश्रुकः दुर्बलकायः कश्चन वृद्धः च दृष्टौ । वृद्धस्य कण्ठे काचित् रुद्राक्षमाला आसीत् । सामन्तः तेन सह वार्तालापं कुर्वन् आसीत् ।

कालीवर्माणं दूरात् एव दृष्ट्वा भल्लूकमान्त्रिकः अवदत् - ''अये कालीवर्मन् ! एषः एव मम गुरुः भल्लूकपादः नाम । सूर्यभूयतेः पुत्रीं काञ्चनमालां मिथ्यामिश्रः दुर्गात् अपहृत्य नीतवान् अस्ति । किम् इदानीं क्रियते भवता ?'' इति ।

परशुप्रहारेण भल्लूकः मारणीयः इति चिन्तयन् स्थितः वधकः इदानीं स्वस्य परशुं स्कन्धे संस्थाप्य अवदत् - ''एषः भल्लूकपादेन पालितः पशुः । अतः एव दैवात् एषः रक्षितः'' इति ।

तदा भल्लूकमान्त्रिकः तस्य समीपम् आगत्य अवदत् - ''मम गुरोः भल्लूकः एव भवताम् अत्र आगमने मार्गदर्शकः जातः इति अहम् इदानीं ज्ञातवान् । मिथ्यामिश्रः गुरुवर्यं भल्लूकेश्वर्याः मन्दिरस्य पुरतः बन्धने स्थापितवान् आसीत् । किन्तु स्वामिभक्तः एषः भल्लूकः तं बन्धनात् विमोच्य आहारादिव्यवस्थापनेन रक्षितवान्'' इति ।

उग्रदण्डः भल्लूकपादं क्रोधेन पश्यन् उच्चैः अपृच्छत् - ''मम सहोदरः कुत्र अस्ति इति वदतु तावत्'' इति ।

तदा भल्लूकपादः निर्भयतया उग्रदण्डं पश्यन् मन्दहासपूर्वकम् उक्तवान् - ''एतं प्रश्नं तान्त्रिकं मिथ्यामिश्रं पृच्छतु, न तु माम् । औषधरसदानेन तं मूकं विधाय मिथ्यामिश्रः तं स्वस्य सेवकं कृतवान् अस्ति । एतस्मिन् एव अरण्ये कुत्रचित् स्थितवन्तं तं यदि भवान् अन्वेष्टुं शक्नुयात् तर्हि राजकुमारी काञ्चनमाला अपि प्राप्येत एव भवता । एतत् अपूर्वं साहसं कर्तुं किं भवत्सु कोऽपि शक्नुयात् ?'' इति ।

तदा कालीवर्मा खड्गस्य त्सरुं हस्तेन गृह्णन् – "एतत् साहसम् अहं करिष्यामि । काञ्चनमालां संरक्ष्य मिथ्यामिश्रं मम खड्गस्य बलिं करिष्यामि । मन्त्रतन्त्रबलात् दौष्ट्यम् आचरन् कोऽपि दुष्टः एतस्मिन् प्रदेशे स्थातुं न अर्हति" इति अवदत् ।

एतस्य श्रावणात् भल्लूकमान्त्रिकः कुपितः – एषः कालीवर्मा मान्त्रिकं माम् अपि निन्दन् अस्ति इति ।

तदा सामन्तराजः सूर्यभूपतिः अवदत् – "कलीवर्मन् ! एषः भल्लूकपादः तच्छिष्यः भल्लूकमान्त्रिकः च न अस्माकं वैरिणौ । शङ्खवादनद्वारा शिष्यस्य मायामर्कटस्य निमन्त्रणाय साहाय्यं कुर्वतः मिथ्यामिश्रस्य सेवकस्य ग्रहणे एतौ मम साहाय्यं कृतवन्तौ विशेषतः । सः सेवकः स्वस्य स्वामिनः वासस्थानं न उक्तवान् । अतः दुष्टः सः मया संहृतः" इति ।

तदा कालीवर्मा – "राजन् सूर्यभूपते ! भवतः पुत्रीम् अपहृतवान् मिथ्यामिश्रः आदौ संहरणीयः । इदानीं वयं सर्वासु दिक्षु विकीर्णाः सन्तः तस्य मिथ्यामिश्रस्य अन्वेषणं करवाम" इति वदन् ततः प्रस्थितवान् ।

तदनन्तरं भल्लूकपादः भल्लूकम् आरुह्य उपविष्टवान् । भल्लूकमान्त्रिकः तेन सह प्रस्थितवान् ।

उग्रदण्डः, वधकः, सामन्तः च अपरस्यां दिशि प्रस्थितवन्तः ।

कालीवर्मा तत्र तत्र दृश्यमानानि पदचिह्नानि एव अन्विष्यन् अग्रे गतवान् । एकत्र तेन मानवानां पदचिह्नानि दृष्टानि । तत्रैव मानवानां



पादात् अपि त्रिगुणिताकारस्य पादस्य चिह्नानि अपि दृष्टानि । तस्य दर्शनात् कालीवर्मा उग्रदण्डस्य भ्रातरं कालदण्डं स्मृतवान् ।

मिथ्यामिश्रः प्रायः एतस्मिन् एव परिसरे कुत्रचित् स्यात् इति चिन्तयन् कालीवर्मा अन्वेषणम् अनुवर्तितवान् । ततः अल्पे एव दूरे कश्चन विशालः सरोवरः दृष्टः । सरोवरतीरे भूमौ निखातं त्रिशूलं दृष्टं तेन । सरोवरस्य मध्ये जपे निमग्नः कश्चन दृढकायः अपि तेन दृष्टः ।

सः आसीत् तान्त्रिकः मिथ्यामिश्रः । दर्शनमात्रेण एव कालीवर्मा तम् अभिज्ञातवान् । क्रोधं प्राप्य सः उच्चैः अवदत् – "अये ! भवान् एव खलु तान्त्रिकः मिथ्यामिश्रः ? तान्त्रिकस्य भवतः मन्त्रजपेन किं वा प्रयोजनम् ? भवता सूर्यभूपतेः पुत्री अपहृत्य आनीता खलु ? सा इदानीं कुत्र अस्ति ?"



इति ।

नेत्रे निमील्य मन्त्रपठने निरतः मिथ्यामिश्रः झटिति नेत्रे उन्मील्य कालीवर्माणं पश्यन् अवदत् – ''भवता कथम् अहम् अभिज्ञातः ? भवान् महाबुद्धिमान् इत्यत्र नास्ति सन्देहः । मम शिष्यः भ्रान्तमतिः वदन् आसीत् यत् अरण्ये केनचित् मम शङ्खवादकः सेवकः मारितः इति । तत् कृत्यं कृतवान् भवान् न स्यात् खलु ?'' इति ।

''तत्सर्वम् अनन्तरं वदिष्यामि । काञ्चनमाला कुत्र इति आदौ वदतु'' इति वदन् कालीवर्मा यावत् खड्गं ग्रहीतुम् उद्युक्तः तावता वृक्षाणां मध्यतः आगतः भ्रान्तमतिः कीच् कुर्वन् आगत्य – ''गुरुवर्य ! एषः एव कालीवर्मा नाम । महाधैर्यशाली साहसी च अस्ति एषः । अविलम्बेन एतस्य प्राणानां हरणम् एव श्रेयसे'' इति वदन् अग्रे आगतवान् कालीवर्मणः संहाराय । कोषतः खड्गम् आक्रष्टुं समयः एव न आसीत् कालीवर्मणः । तावता तेन पार्श्वे एव तान्त्रिकस्य त्रिशूलं दृष्टम् । सः झटिति तत् त्रिशूलम् उन्नीय मायामर्कटं लक्ष्यीकृत्य अक्षिपत् । तच्च त्रिशूलं मायामर्कटस्य शरीरे दृढतया लग्नम् । मायामर्कटः भूमौ अपतत् ।

महत्या वेदनया इतस्ततः लुठन् मायामर्कटः – ''गुरुवर्य ! भवतः सेवायाः भाग्यं मया परलोके अपि पुनः प्राप्यताम्'' इति वदन् प्राणैः वियुक्तः जातः ।

कालीवर्मा झटिति कोषतः खड्गम् आकृष्य आश्चर्येण स्तब्धं तान्त्रिकम् उद्दिश्य – ''अये दुष्टमान्त्रिक ! भवता भल्लूकेश्वर्याः उपासना क्रियते खलु ? तस्याः नाम्ना एव अहं भवन्तं तस्यै बलिरूपेण समर्पयिष्यामि । ततः पूर्वं भवान् वदतु यत् काञ्चनमाला कुत्र स्थापिता इति'' इति ।

एतत् श्रुत्वा तान्त्रिकः मन्दहासं प्रकटयन् हस्तौ प्रसार्य शिरः चालयन् हस्ताभ्यां किमपि अभिनीतवान् । एतस्य तात्पर्यं किम् इति कालीवर्मा यावत् चिन्तयन् आसीत् तावता कश्चन स्त्रीस्वरः तेन श्रुतः – ''अये वीरयुवक ! सावधानेन भवितव्यं भवता । एषः तान्त्रिकः मूकं राक्षसं किमपि सूचयन् अस्ति'' इति ।

एतत् श्रुत्वा कालीवर्मा विद्युद्गत्या परिवृत्य पृष्ठतः अपश्यत् । तावता उग्रदण्डसदृशः कश्चन राक्षसः स्कन्धस्थां युवतिं भूमौ स्थापयित्वा सकृत् उच्चैः हुङ्कृत्य स्वस्य शिलागदाम् उन्नीय कालीवर्मणः दिशि

आगतवान् । कालीवर्मा झटिति पार्श्वदेशं गतः । तस्मात् सः राक्षसः पङ्के अधोमुखतया अपतत् । तस्य हस्ते स्थिता शिलागदा दूरे पतिता ।

राक्षसः उच्चैः गर्जनं कुर्वन् पङ्कतः उत्थातुं प्रयासम् अकरोत् । तावता कालीवर्मा शिलागदाम् उन्नीय तया राक्षसं बलात् प्रहृतवान् । राक्षसः उच्चैः आक्रोशनं कुर्वन् अचेतनतां गतः ।

तान्त्रिकः मिथ्यामिश्रः ततः पलायनाय मार्गम् अन्वेष्टुम् इतस्ततः अपश्यत् । तीक्ष्णदृष्ट्या एतत् दृष्टवान् कालीवर्मा राक्षसेन आनीतां तरुणीं पृष्टवान् - ''भवती एव खलु सूर्यभूपतेः पुत्री काञ्चनमाला नाम ?'' इति ।



सा युवतिः अङ्गीकारपूर्वकं शिरः चालयन्ती अवदत् - ''तान्त्रिकस्य उभौ अपि सेवकौ दिवं गतौ । एषः अपि सजीवं न तिष्ठेत् । मम हस्ते आयुधं किमपि नास्ति । स्वीयं खड्गं भवान् मह्यं ददातु । राक्षसस्य शिलागदां भवान् स्वीकरोतु । उभौ अपि सम्भूय तस्य तान्त्रिकस्य संहारं करवाम'' इति ।

एतं प्रस्तावं सहर्षम् अङ्गीकुर्वन् कालीवर्मा स्वस्य खड्गं काञ्चनमालायै दत्तवान् । शिलागदां च स्कन्धे संस्थाप्य सरोवरजले अवतरणाय उद्युक्तः च ।

तावता तत्र उपस्थितः राजा जितकेतुः एतत् दृष्ट्वा उच्चस्वरेण अवदत् - ''अये ! कालीवर्मन् ! एषः सरोवरः मकराणाम् आवासभूमिः । अतः झटिति तीरम् आगच्छतु भवान् । एषः तान्त्रिकः मकरेण एव संहृतः भवेत् अपि । यदि तथा न भवेत् तर्हि अपि एतस्य वधाय मम केचन सैनिकाः, वधकः, उग्रदण्डः च इत एव आगच्छन्तः सन्ति'' इति ।

ततः सः काञ्चनमालायाः समीपम् आगत्य - ''वत्से ! भवती मम दत्तकपुत्री अस्ति । अतः भवत्या इष्टाय तरुणाय भवतीं दत्त्वा सवैभवं विवाहस्य निर्वर्तनं मम कर्तव्यं खलु'' इति ।

एतत् श्रुत्वा काञ्चनमाला लज्जया मुखम् अवनमय्य स्थितवती । तावता सामन्तः सूर्यभूपतिः, भल्लूकारूढः भल्लूकपादः, भल्लूकमान्त्रिकः, वधकः, राक्षसः उग्रदण्डः च तत्र उपस्थिताः ।

सूर्यभूपतिः पुत्र्याः समीपं गत्वा अवदत् - ''वत्से ! भवतीं सजीवं द्रष्टुं शक्नुयाम् इति मया कदापि न चिन्तितम् आसीत्'' इति ।

ततः सः कालीवर्माणं पश्यन् अवदत् - ''कालीवर्मन् ! भवान् असमानवीरः इत्यत्र सन्देहः एव नास्ति'' इति ।

ततः राजा जितकेतुः मन्दसाहपूर्वकं कालीवर्मणः हस्तं स्वस्य हस्तेन गृहीत्वा तम् आकर्षन् काञ्चनमालायाः समीपं गत्वा सर्वान् उद्दिश्य अवदत् - ''अहम् इदानीं मम दत्तक-पुत्रीं काञ्चनमालाम् एतस्मै क्षत्रिययुवकाय कालीवर्मणे दत्त्वा विवाहं निर्वर्तयन् अस्मि । अग्रे एषः एव चन्द्रशिलाराज्यस्य राजा भविष्यति'' इति ।

एतत् श्रुत्वा सर्वे हर्षानादं कृतवन्तः । तस्मिन् एव समये सरोवरे चीत्कारः कश्चन श्रुतः । सर्वेषां दृष्टिः सरोवरदिशि गता ।

तत्र कश्चन मकरः मिथ्यामिश्रं गृहीत्वा जलस्य अन्तः आकर्षन् आसीत् । मिथ्यामिश्रः च ततः आत्मनः रक्षणाय बहुधा प्रयतमानः आसीत् । एतत् दृष्टवान् भल्लूकमान्त्रिकः उत्साहेन मन्त्रदण्डम् उन्नीय - ''आर्य, भल्लूकपादवर्य ! इतः परं भवान् एव देव्याः भल्लूकेश्वर्याः प्रधानार्चकः भविष्यति । भवतः शत्रुः तत्र सरोवरे घोरस्य मकरस्य आहारः जायमानः अस्ति'' इति ।

अल्पे एव काले मकरः मिथ्यामिश्रम् आकृष्य जलस्य अन्तः अनयत् एव । यदा मिथ्यामिश्रः अदृश्यतां गतः तदा उग्रदण्डः कालदण्डस्य समीपं गत्वा तम् उत्थापयन् - ''भ्रातः ! अद्यावधि यः भवन्तं पीडयन् आसीत् सः तान्त्रिकः इदानीं मकरस्य आहारः जातः अस्ति । इदानीं भवान् उत्तिष्ठतु तावत्'' इति ।

कालदण्डः झटिति निद्रातः इव उत्थाय सरोवरं पश्यन् उच्चस्वरेण - ''उग्रदण्ड ! एषोऽहम् इदानीं वक्तुं समर्थः । तान्त्रिकस्य मरणात् मम मूकता अपगता । मां सम्मुखीकृत्य गदया प्रहृत्य मूर्च्छितं कृतवान् सः वीरः क्व ? सः एव मम स्वामी भविष्यति । अहं श्रद्धया तस्य सेवां करिष्यामि'' इति वदन् कालीवर्मणः समीपम् आगत्य तं स्वस्य स्कन्धे उपवेशितवान् । अपरस्मिन् स्कन्धे तेन काञ्चनमाला स्थापिता ।

एतत् दृष्ट्वा भल्लूकमान्त्रिकादयः उत्साहेन हर्षनादं कृतवन्तः ।

*(समाप्तम्)*



# वेताल-कथा

## निराशा स्वर्णरेखा

त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! विघ्नान् अपरिगणय्य भवान् लक्ष्यसिद्ध्यर्थं यत् परिश्राम्यति तत् तु नितरां श्लाघार्हम् एव । लक्ष्यसिद्ध्ये यदा प्रयत्नः क्रियते तदा विघ्नाः सहजाः । किन्तु विघ्नानां कारणतः प्रयत्नस्य परित्यागः, फलस्य उपेक्षा वा न उचिता खलु ? पूर्वं मयूरध्वजः महान्तं प्रयत्नं कृतवान् प्रेयस्याः मेलनाय । किन्तु प्रेयसी यदा उपस्थिता तदा तु अनुदारतां दर्शयन् सः तां



तिरस्कृतवान् । भवतः मार्गायासस्य परिहाराय तस्याः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन मयूरध्वजस्य कथा आरब्धा -

मयुरध्वजः अवन्तिराज्यस्य राजा । कदाचित् सः मनोविनोदाय मृगयां कर्तुम् अरण्यं गतवान् । मृगयासमये सः अन्यैः पृथग्भूतः सन् अरण्ये बहुदूरं गतवान्, मध्याह्ने श्रान्तः सन् कस्यचित् वृक्षस्य अधः उपविष्टवान् च । तदवसरे गुल्मानां मध्यतः कश्चन व्याघ्रः आगत्य आक्रमणम् अकरोत् । यद्यपि धनुर्बाणादयः पार्श्वे आसन्, तथापि तेषां स्वीकरणाय राज्ञा अवसरः न प्राप्तः । अतः सः रिक्तहस्ततया एव व्याघ्रं सम्मुखीकृतवान् । समग्रां शक्तिम् उपयुज्य सः तं व्याघ्रं मारितवान् । स्वयमपि व्रणितः सन् तत्रैव मूर्च्छां गतः ।

तस्मिन् एव समये स्वर्णरेखा नाम गन्धर्वकन्या सखीभिः सह तत्र आगता । मयूरध्वजस्य साहसं दृष्ट्वा सा व्यामुग्धा जाता । तस्य भुजबलं तस्याम् आश्चर्यम् अजनयत् । सा मूर्च्छां गतस्य राज्ञः समीपं गत्वा हस्तेन तस्य शरीरं स्पृष्टवती । क्षणाभ्यन्तरे राज्ञः शरीरे स्थिताः व्रणाः अपगताः, राजा उत्थाय उपाविशत् च । स्वर्णरेखा तस्य अपूर्वं सौन्दर्यं दृष्ट्वा अश्चर्यान्विता सती निर्निमेषदृष्ट्या तम् एव अपश्यत् । राजा अपि तथैव ताम् अपश्यत् । एतत् दृष्ट्वा स्वर्णरेखा लज्जया शिरः अधः कृतवती । राजा अपि तस्याः सौन्दर्यं दृष्ट्वा नितराम् आश्चर्यचकितः ।

उभौ अपि वार्तालापात् परस्परयोः विषये विवरणं ज्ञातवन्तौ । ततः स्वर्णरेखा राजानम् अवदत् - ''राजन् ! अहं हृत्पूर्वकतया भवति अनुरक्ता अस्मि । यदि भवता अनुमन्येत तर्हि गान्धर्वविधिना भवतः परिणयाय अहं सज्जा'' इति ।

एतं प्रस्तावं श्रुत्वा राजा सन्तोषं प्रकटयन् अवदत् - ''अहम् अपि भवतीं विशेषतः इच्छामि । तथापि विवाहप्रस्तावः अयं भवत्या अविचिन्त्य उपस्थापितः इति भाति । एतद्विषये त्वरा न शोभते । भूलोके जीवनं न सरलम् । क्षणे क्षणे कष्टानि सम्मुखीकरणीयानि भवन्ति अत्र । भवती तु गन्धर्वलोके जाता सुकुमारकाया कन्या । कष्टं कीदृशम् इत्येव सर्वथा न ज्ञायते भवत्या । अतः भवती अत्र सुखेन स्थातुं न अर्हेत्'' इति ।

''पत्युः सान्निध्यं यत्र भवति तदेव स्वर्गधाम पत्न्यै । अप्सरोलोकस्य सुखादपि एतदेव श्रेष्ठम्'' इति अवदत् स्वर्णरेखा ।

''क्षणिकेन आकर्षणेन वशीकृता भवती एवं वदति इति भाति'' इति अवदत् राजा ।

''नैव ! तथा नास्ति । मम प्रेम शाश्वतम्'' इति अवदत् स्वर्णरेखा ।

''भवत्याः प्रेम वास्तविकम् उत न इति परीक्षितुं भवतु काचित् परीक्षा'' इति अवदत् राजा ।

तदा स्वर्णरेखा झटिति उक्तवती - ''सा परीक्षा का ? उच्यताम्'' इति ।

''इदानीं भवती स्वलोकं गच्छतु । षट् मासान् यावत् सम्यक् चिन्तयतु । षण्णां मासानाम् अनन्तरम् अपि यदि भवत्याः इच्छा दृढतरा एव तिष्ठेत् तर्हि आगामिन्यां भाद्रपद-शुक्लद्वादश्यां भवती अत्र आगच्छतु । तत्र दृश्यमानस्य शाम्भवीवृक्षस्य अधः तस्मिन् दिने अहम् अपि भवत्याः प्रतीक्षां करिष्यामि । तत्रैव आवयोः विवाहः भवतु'' इति अवदत् राजा ।

''भवतु नाम । निश्चिते काले अवश्यम् अहम् आगमिष्यामि एव'' इति दृढेन स्वरेण उक्त्वा सखीभिः सह ततः निर्गतवती स्वर्ण-रेखा ।

स्वलोकं गता सा मयूरध्वजम् एव स्मरन्ती षट् मासान् यापितवती । निश्चिते दिने, तन्नाम भाद्रपदशुक्लद्वादश्याम् एकाकिनी भूलोकम् आगता । मयूरध्वजेन सूचितस्य शाम्भवी-वृक्षस्य समीपे मनोहरं सरोवरं दृष्टवती सा । तत्र स्नानं कर्तुम् इच्छन्ती सा स्वस्य कण्ठे



स्थितं महिमान्वितं हारं निष्कास्य पुष्पसस्ये स्थापितवती, सरोवरम् अवतीर्णा च । जलस्य शीतलतासुखम् अनुभवन्ती सा इहलोकम् एव विस्मृतवती । अल्पे एव काले तस्याः शरीरं कान्तिहीनं जातम् । एतस्मात् आश्चर्यं भीतिं च अनुभवन्ती सा सरोवरतीरे दृष्टिं प्रसारित-वती ।

तत्र महिमान्वितं हारं धृत्वा स्थिता काचित् तरुणी तया दृष्टा ।

सा झटिति तीरम् आगत्य तस्याः तरुण्याः समीपं गत्वा क्रोधेन अवदत् - ''का भवती ? मम हारः किमर्थं चोरितः भवत्या ? हारः प्रत्यर्प्यताम्'' इति ।

''मम नाम कादम्बरी इति । शशाङ्कपुर-ग्रामस्य निवासिनी अहम् । मया चौर्यबुद्ध्या हारः न स्वीकृतः । एषः हारः भवत्याः इति



अहं न जानामि । अत्र आगमनस्य अनन्तरं मया हारः दृष्टः । अतः सः मया धृतः । किञ्चित्कालम् एषः हारः मम कण्ठे यदि भवेत् तर्हि का आपत्तिः भवत्याः ?'' इति अपृच्छत् सा तरुणी ।

''मम आभरणस्य स्पर्शनाय अपि योग्यता नास्ति भवत्याः । एषः न सामान्यः हारः । गन्धर्वकन्याः एव एतं धर्तुम् अर्हन्ति । महिमान्वितः हारः एषः'' इति अवदत् स्वर्णरेखा ।

''अपूर्वा शक्तिः कापि मया न अपेक्ष्यते । यदि एषः हारः मम कण्ठे स्यात् तर्हि राजा मयूरध्वजः मम परिणयं न निराकुर्यात्'' इति अवदत् कादम्बरी ।

एतत् श्रुत्वा अत्याश्चर्येण स्वर्णरेखा उपहासमिश्रितेन स्वरेण अपृच्छत् - ''किं राजा भवतीं परिणयेत् ?'' इति ।

''कुतो न ? सः परिणेतव्यः इति उद्देशेन एव अहं राजधानीं गच्छन्ती अस्मि । महाराजः एव परिणेष्यते, न अन्यः इति अहं मातापितरौ उक्तवती अस्मि अपि । ताभ्यां ग्रामजनैः वा मम वचने विश्वासः न कृतः । मम रूपम् उत्कृष्टं नास्ति इति वदन्ति ते । मां ते उपहसन्ति अपि । अहं तेषां पुरतः सप्रतिज्ञम् उक्तवती अस्मि यत् महाराजं परिणीय राज्ञी भविष्यामि एव इति । मम प्रतिज्ञा पूरिता भविष्यति इत्यत्र मम विश्वासः अस्ति एव'' इति अवदत् कादम्बरी ।

''भवत्याः प्रतिज्ञा पूर्णा न भविष्यति । अहं राजा च परस्परम् अनुरक्तौ स्वः । मम परिणयः तेन प्रतिज्ञातः अस्ति अपि । अचिरात् एव शाम्भवीवृक्षस्य अधः आवयोः परिणयः प्रवर्तिष्यते'' इति अवदत् स्वर्णरेखा ।

एतत् श्रुत्वा कादम्बरी चिन्ताक्रान्ता जाता । स्वर्णरेखा मम मार्गे कण्टकायते इति अवगतवती सा । इतः एतस्याः अपसारणम् एव उचितम् इति विचिन्त्य सा - ''यदि एषः हारः महिमान्वितः स्यात् तर्हि एतस्मिन् एव क्षणे भवत्याः शुकत्वं भवतु'' इति वदन्ती हारं स्पृष्टवती ।

अनन्तरक्षणे एव स्वर्णरेखा शुकरूपं प्राप्तवती । ततः कादम्बरी स्वर्णरेखायाः रूपं धृत्वा शाम्भवीवृक्षस्य समीपं गतवती । तां दृष्ट्वा राजा 'एषा एव स्वर्णरेखा' इति चिन्तयन् महता आनन्देन तां राजधानीं नीतवान् । अचिरात् एव महता वैभवेन तयोः विवाहः सम्पन्नः अपि ।

कादम्बरी अवन्तीराज्यस्य पट्टमहिषी जाता । अचिन्तिततया तस्याः प्रतिज्ञा पूर्णा जाता आसीत् ।

शुकरूपतां गता स्वर्णरेखा स्वस्य दुर्गतिनिमित्तं विलपनं कृतवती । कश्चन व्याधः तां कस्मैचित् कलाकाराय विक्रीतवान् । सः कलाकारः तां सम्भाषणं कौशलानि च शिक्षितवान् । कदाचित् शुकी स्वस्य करुणकथां तं कलाकारम् उक्तवती । कलाकारः तस्याः सान्त्वनं कृतवान् ।

कदाचित् कस्यचित् राजोद्योगिनः साहाय्येन सः कलाकारः राजास्थाने कथञ्चित् प्रवेशं प्राप्तवान् । आस्थानं गतेन तेन स्वस्य शुक्याः कौशलस्य प्रदर्शनाय अनुज्ञा प्रार्थिता । राजा अनुज्ञातवान् । तदीयं प्रदर्शनं द्रष्टुं राजकुटुम्बीयाः अधिकारिणः आस्थानिकाः च कुतूहलिनः जाताः ।

तस्य प्रदर्शनं सर्वेषां चित्तम् आकर्षत् । पादाभ्यां कन्दुकस्य चालनम्, अग्निचक्रे प्रवेशः, बाणेभ्यः आत्मरक्षणम् इत्यादीनि बहूनि अपूर्वाणि कौशलानि प्रादर्शयत् सा शुकी । क्रीडामध्ये सा मधुराणि वचनानि अश्रावयत् अपि ।

एतस्मात् नितरां सन्तुष्टः राजा अवदत् - ''अये शुकि ! भवत्याः कौशलम् अपूर्वम् । किम् इच्छति भवती ? यत् भवत्या इष्यते तत् दास्यामि अहम्'' इति ।

''यत् मया इष्यते तत् किं निश्चयेन दीयेत भवता ? वचनभङ्गः तु न क्रियेत खलु ?'' इति अवदत् शुकी ।

''नैव । मया तु वचनभङ्गः न करिष्यते



कदाचिदपि । निस्सङ्कोचं स्वस्य अपेक्षां प्रकाशयितुम् अर्हति भवती'' इति अवदत् राजा ।

''राज्ञ्या धृतं हारं क्षणकालं धर्तुम् अवसरं कल्पयतु कृपया'' इति प्रार्थितवती शुकी ।

'कण्ठहारः शुक्यै दीयताम्' इति राज्ञीम् असूचयत् राजा । राज्ञः आज्ञा तिरस्कर्तुं न शक्या इत्यतः भीत्या एव स्वर्णरेखारूपेण स्थिता कादम्बरी शुक्याः कण्ठे हारं समर्पितवती । अनन्तरक्षणे एव शुकी स्वर्णरेखारूपं प्राप्तवती, कादम्बरी च स्वीयं प्राक्तनं रूपम् । आश्चर्यान्वितं राजानं स्वर्णरेखा प्रवृत्तं समग्रम् अश्रावयत् । एतस्मात् भीता कादम्बरी धावन्ती राजभवनस्य ऊर्ध्वभागं प्राप्य ततः कूर्दनेन मरणं प्राप्तवती ।

''सा वञ्चिका योग्यं दण्डनं स्वयं प्राप्तवती ।

इतःपरं भवान् मां परिणेतुम् अर्हति'' इति अवदत् स्वर्णरेखा ।

राजा क्षणकालस्य मौनस्य अनन्तरं दीर्घं निःश्वस्य अवदत् - ''भद्रे ! क्षन्तव्यः अहम् । अहं भवत्याः इच्छां पूरयितुं न अर्हामि । या वञ्चना प्रवृत्ता तस्याः पात्रता मम इव भवत्याः अपि अस्ति एव । भूलोकम् आगता भवती महत् कष्टम् अनुभूतवती । यत् प्रवृत्तं तत् विस्मृत्य भवती स्वीयं लोकं प्रतिगच्छतु । अत्रत्यानि कष्टानि भवत्या सोढुं न शक्यानि । भवती स्वलोके सुखेन जीवतु'' इति ।

राज्ञः वचनं श्रुत्वा स्वर्णरेखा विषाद-मिश्रितेन स्वरेण - ''यथा भवता उच्यते तथैव भवतु'' इति उक्त्वा ततः अदृश्यतां प्राप्य गन्धर्वलोकं गतवती ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! राजा किमर्थं स्वर्णरेखायाः स्वीकारं तिरस्कृतवान् ? किं तस्याम् अनुरागः न आसीत् तस्य ? अनुरागस्य अल्पतायाः कारणतः एव सः षण्मासावधिकां प्रतीक्षां कारितवान् किम् ? स्वर्णरेखा अपि विशेषविरोधं विना किमर्थं राज्ञः वचनम् अङ्गीकृतवती ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा छिन्नं भवेत्'' इति ।

तदा वेतालस्य सन्देहं निवारयितुम् इच्छन् त्रिविक्रमः अवदत् - ''मयूरध्वजः स्वर्ण-रेखायाम् अनुरक्तः आसीत् इत्यत्र सन्देहः एव नास्ति । षट् मासान् यावत् न केवलं स्वर्णरेखायाः, अपि तु स्वस्य अनुरागः अपि परीक्षितः तेन । स्वस्यापि अनुरागं दृढं ज्ञात्वा सः शाम्भवीवृक्षस्य समीपं गतः । किन्तु दौर्भाग्येण कादम्बरी तं वञ्चितवती । स्वर्ण-रेखायाः दर्शनात् एतत् राज्ञा अवगतम् । बाह्यसौन्दर्यदर्शनमात्रेण यत् निर्णीतं तत् अनुचितम् इति राजा अवगतवान् । कृतमेव दोषं कर्तुं न इच्छति स्म सः । अतः एव सः स्वर्णरेखां स्वस्य निर्णयं श्रावितवान् । एतत् तस्य बौद्धिकपक्वतां सत्संस्कारं च द्योतयति । स्वर्णरेखा अपि राज्ञः एतम् आशयं जानती स्वलोकं प्रति गतवती'' इति ।

एवं राज्ञः मौनभङ्गं कर्तुं समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






# 'पोलो' क्रीडा भारतमूला



भारतं चतुरङ्ग-कबड्डी-हाकीप्रभृतीनां क्रीडानां मूलम् इति वयं जानीमः एव । पोलोक्रीडा अपि वस्तुतः भारतमूला एव । पूर्वम् एतस्याः नाम आसीत् 'चौगन्' इति । रामः भ्रातृभिः सह एतां क्रीडति स्म इति श्रूयते । पर्शियादेशात् (इरान् इति अद्यतनं नाम) एषा क्रीडा आगता इति कैश्चित् कथ्यते । वस्तुतः तु एतस्याः मूलम् अस्ति मणिपुरराज्यम् । वेणुसस्यस्य मूलैः निर्मितः कन्दुकः उच्यते 'पुला' इति । अश्वारोही क्रीडकः काष्ठाग्रयुक्तेन वेणुदण्डेन तं कन्दुकं प्रहरति स्म । प्रतिपक्षं चत्वारः क्रीडकाः भवन्ति स्म । १७ शतके १८ शतके च धनिकपरिवारे एषा 'पोलो' क्रीडा अतीव प्रिया आसीत् । मणिपुरे अक्टोबर्-एप्रिल्मासयोः मध्यभागे यदा कृष्यादि-कार्याणि न्यूनानि तदा एषा क्रीड्यते स्म । प्रायः सैन्यजनाः आधिक्येन एतस्यां प्रवर्तन्ते स्म ।

# दिनपरिमाणम्

अद्य बालः अपि वदति यत् वर्षे ३६५ दिनानि भवन्ति, अधिकवर्षे एकं दिनम् आधिक्येन भवति इति । किन्तु पूर्वम् एवं न आसीत् । १५०० वर्षेभ्यः पूर्वं भारतीयः ज्योतिषिकः भास्कराचार्यः निर्णयं श्रावितवान् आसीत् यत् पृथिवी ३६५.२५८७ ५६४८४ मितैः दिनैः सूर्यस्य परिक्रमणं करोति इति । सः कालः एव संवत्सरशब्देन निर्दिश्यते । शून्यस्य अन्वेषकः अपि भारतीयः एव । आर्यभटेन अन्विष्टं तत् । नवपर्यन्तानां सङ्ख्यानाम् उपयोगः अपि तेन एव ज्ञापितः ।



इतःपरं भवान् मां परिणेतुम् अर्हति'' इति अवदत् स्वर्णरेखा ।

राजा क्षणकालस्य मौनस्य अनन्तरं दीर्घं निःश्वस्य अवदत् - ''भद्रे ! क्षन्तव्यः अहम् । अहं भवत्याः इच्छां पूरयितुं न अर्हामि । या वञ्चना प्रवृत्ता तस्याः पात्रता मम इव भवत्याः अपि अस्ति एव । भूलोकम् आगता भवती महत् कष्टम् अनुभूतवती । यत् प्रवृत्तं तत् विस्मृत्य भवती स्वीयं लोकं प्रतिगच्छतु । अत्रत्यानि कष्टानि भवत्या सोढुं न शक्यानि । भवती स्वलोके सुखेन जीवतु'' इति ।

राज्ञः वचनं श्रुत्वा स्वर्णरेखा विषाद-मिश्रितेन स्वरेण - ''यथा भवता उच्यते तथैव भवतु'' इति उक्त्वा ततः अदृश्यतां प्राप्य गन्धर्वलोकं गतवती ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! राजा किमर्थं स्वर्णरेखायाः स्वीकारं तिरस्कृतवान् ? किं तस्याम् अनुरागः न आसीत् तस्य ? अनुरागस्य अल्पतायाः कारणतः एव सः षण्मासावधिकां प्रतीक्षां कारितवान् किम् ? स्वर्णरेखा अपि विशेषविरोधं विना किमर्थं राज्ञः वचनम् अङ्गीकृतवती ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा छिन्नं भवेत्'' इति ।

तदा वेतालस्य सन्देहं निवारयितुम् इच्छन् त्रिविक्रमः अवदत् - ''मयूरध्वजः स्वर्ण-रेखायाम् अनुरक्तः आसीत् इत्यत्र सन्देहः एव नास्ति । षट् मासान् यावत् न केवलं स्वर्णरेखायाः, अपि तु स्वस्य अनुरागः अपि परीक्षितः तेन । स्वस्यापि अनुरागं दृढं ज्ञात्वा सः शाम्भवीवृक्षस्य समीपं गतः । किन्तु दौर्भाग्येण कादम्बरी तं वञ्चितवती । स्वर्ण-रेखायाः दर्शनात् एतत् राज्ञा अवगतम् । बाह्यसौन्दर्यदर्शनमात्रेण यत् निर्णीतं तत् अनुचितम् इति राजा अवगतवान् । कृतमेव दोषं कर्तुं न इच्छति स्म सः । अतः एव सः स्वर्णरेखां स्वस्य निर्णयं श्रावितवान् । एतत् तस्य बौद्धिकपक्वतां सत्संस्कारं च द्योतयति । स्वर्णरेखा अपि राज्ञः एतम् आशयं जानती स्वलोकं प्रति गतवती'' इति ।

एवं राज्ञः मौनभङ्गं कर्तुं समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## 'पोलो' क्रीडा भारतमूला



भारतं चतुरङ्ग-कबड्डी-हाकीप्रभृतीनां क्रीडानां मूलम् इति वयं जानीमः एव । पोलोक्रीडा अपि वस्तुतः भारतमूला एव । पूर्वम् एतस्याः नाम आसीत् 'चौगन्' इति । रामः भ्रातृभिः सह एतां क्रीडति स्म इति श्रूयते । पर्शियादेशात् (इरान् इति अद्यतनं नाम) एषा क्रीडा आगता इति कैश्चित् कथ्यते । वस्तुतः तु एतस्याः मूलम् अस्ति मणिपुरराज्यम् । वेणुसस्यस्य मूलैः निर्मितः कन्दुकः उच्यते 'पुला' इति । अश्वारोही क्रीडकः काष्ठाग्रयुक्तेन वेणुदण्डेन तं कन्दुकं प्रहरति स्म । प्रतिपक्षं चत्वारः क्रीडकाः भवन्ति स्म । १७ शतके १८ शतके च धनिकपरिवारे एषा 'पोलो' क्रीडा अतीव प्रिया आसीत् । मणिपुरे अक्टोबर्-एप्रिल्मासयोः मध्यभागे यदा कृष्यादि-कार्याणि न्यूनानि तदा एषा क्रीड्यते स्म । प्रायः सैन्यजनाः आधिक्येन एतस्यां प्रवर्तन्ते स्म ।

## दिनपरिमाणम्

अद्य बालः अपि वदति यत् वर्षे ३६५ दिनानि भवन्ति, अधिकवर्षे एकं दिनम् आधिक्येन भवति इति । किन्तु पूर्वम् एवं न आसीत् । १५०० वर्षेभ्यः पूर्वं भारतीयः ज्योतिषिकः भास्कराचार्यः निर्णयं श्रावितवान् आसीत् यत् पृथिवी ३६५.२५८७ ५६४८४ मितैः दिनैः सूर्यस्य परिक्रमणं करोति इति । सः कालः एव संवत्सरशब्देन निर्दिश्यते । शून्यस्य अन्वेषकः अपि भारतीयः एव । आर्यभटेन अन्विष्टं तत् । नवपर्यन्तानां सङ्ख्यानाम् उपयोगः अपि तेन एव ज्ञापितः ।





# महालक्ष्मीस्वरूपा श्वश्रूः

विवाहानन्तरं सुनीता यदा पतिगृहं प्रति प्रस्थिता तदा तस्याः माता तां बोधितवती – ''इतःपरं श्वश्रूः एव भवत्याः माता । दैवते इव तस्याम् आदरः करणीयः भवत्या'' इति ।

पतिगृहम् आगता सुनीता मातुः वचनम् अक्षरशः पालितवती । तस्मात् श्वश्रूः पद्मावती तस्याः विषये नितरां सन्तुष्टा ।

पद्मावती रमणीयतया गृहम् अलङ्करोति स्म । तस्याः पाकः अपि स्वादुः भवति स्म । उत्तमा गायिका अपि आसीत् सा । सुनीता ततः बहून् अंशान् ज्ञातवती । कदाचित् सा श्वश्रूम् उक्तवती – ''आर्ये ! भवती महालक्ष्मीः इव अस्ति । विद्याभिः तु सरस्वती एव स्वयम् । मम माता भवत्या ज्ञातान् बहून् अंशान् न जानाति। यदि भवत्याः स्नुषात्वं मया प्राप्तं न स्यात् तर्हि अहं कूपमण्डूकी एव अभविष्यम्'' इति ।

तदा पद्मावती अवदत् – ''भवत्याः माता किं जानाति, किं न जानाति इति अहं न जानामि । किन्तु एतत् तु सत्यं यत् सा भवत्यां सद्गुणान् उत्पादितवती इति । सद्गुणाः एव सर्वाभ्यः विद्याभ्यः श्रेष्ठाः'' इति ।

ततः अल्पे एव काले सुनीतायाः पत्या राघवेण राजास्थाने उत्तमः उद्योगः प्राप्तः । उत्तमं वेतनम्, उन्नतं स्थानं च प्राप्तं तेन । अतः पद्मावती सर्वान् अवदत् यत् मम स्नुषायाः प्रवेशात् एव एतत् सम्पन्नम् इति ।

पत्या सह राजधानीं प्रति प्रस्थितवती सुनीता श्वश्रूम् उक्तवती – ''आर्ये, महालक्ष्मी-स्वरूपायाः भवत्याः दर्शनम् इतःपरं प्रतिदिनं मम यत् न भविष्यति तत् तु महतः दौर्भाग्यस्य विषयः'' इति ।

चत्वारि वर्षाणि अतीतानि । राजधानीं प्रति गमनस्य अनन्तरवर्षे एव सुनीता पुत्रीं प्रसुतवती । कार्यगौरवकारणतः अनुजस्य गणपतेः विवाहावसरे राघवः उपस्थातुं न

शक्तवान् ।

गणपतेः पत्नी तपती रूक्षस्वभावा । पद्मावती ज्येष्ठस्नुषां सदा प्रशंसति स्म । एतत् असहमाना तपती कदाचित् श्वश्रूम् उक्तवती - ''दूरतः पर्वतो रम्यः । या पूर्वं भवतीं लक्ष्मीं सरस्वतीं च कथयति स्म सा इदानीं न जाने भवत्याः विषये किं किं वदन्ती स्यात् इति'' इति ।

ज्येष्ठायाः स्नुषायाः व्यवहारः इदानीं कथं स्यात् इति ज्ञातव्यम् इति इच्छा पद्मावत्याः अपि आसीत् एव । अतः सा पतिं सानुरोधम् अवदत् - ''आर्य, वयं सर्वे राजधानीं गत्वा आगच्छाम'' इति । तस्याः पत्या एतत् अङ्गी-कृतम् । अनुकूले दिने सर्वे नगरं गतवन्तः । राघवः तान् सहर्षं स्वागतीकृत्य गृहं नीतवान् ।

राघवस्य पुत्री निर्मला षड्वर्षीया । सा गृहम् आगतस्य एकैकस्य अपि परिचयं प्राप्त-वती । पद्मावती एव पितामही इति यदा ज्ञातं तदा सा उक्तवती - ''अहो ! भवती एव मम पितामही !! मम मातुः कथनस्य अनुगुणम् अहं चिन्तितवती आसं यत् भवती स्थूला, कृष्णवर्णीया, वामना च स्यात् इति । भवती तु कृषा, सुन्दरी, देवीतुल्या च दृश्यते'' इति ।

एतस्य श्रवणात् पद्मावत्याः मुखं विच्छायं जातम् । तपती विजयगर्वयुक्तं हासं प्रदर्शयन्ती श्वश्रूमुखं दृष्टवती ।

पुत्र्याः वचनं श्रुत्वा सुनीता अपि क्षणकालं दिग्भ्रान्ता । क्षणानन्तरं सा हसितवती । राघवः अपि अहसत् । तत्र उपस्थितेषु कोऽपि न ज्ञातवान् यत् एतौ किमर्थं हसतः इति । तावता पाकशालातः आगता पाचिका अवदत् - ''आर्ये ! पाकः सज्जः'' इति ।

सा पाचिका कृष्णवर्णीया, वामना, स्थूला च आसीत् । ''एतावच्छीघ्रं पाकः सज्जः एव । अहो, कौशलं भवत्याः ! भवती साक्षात् अन्नपूर्णा एव । महालक्ष्मीस्वरूपा अस्ति भवती'' इति वदन्ती सुनीता तस्याः प्रशंसाम् अकरोत् ।

एतत् श्रुतवन्तः पद्मावतीप्रभृतयः सर्वे अव-गतवन्तः यत् लघुबालिकायाः निर्मलायाः वचनस्य किम् आन्तर्यम् इति ।

''भवती महाबुद्धिमती वत्से !'' इति वदन्ती पद्मावती ताम् उन्नीय प्रीत्या आलिङ्गितवती, सशब्दम् अचुम्बत् च ।



# वार्ताविशेषः

## प्रचलिष्यति व्याघ्रगणना



भारतस्य प्रमुखेषु वन्यजीविक्षेत्रेषु अन्यतमे राजस्थानीये सर्सिकाव्याघ्राभयारण्ये लक्षितं यत् एषु दिनेषु २३ व्याघ्राः अदृश्यतां गताः सन्ति इति । अतः व्याघ्राणां गणना परिष्करणीया इति एषु दिनेषु निर्णीतम् । एषा राष्ट्रियगणना अन्येषां वन्यजीविनां सङ्ख्याम् अपि परिमास्यति । नवेम्बर्मासे गणनायाः आरम्भः । फेब्रवरीमासे (२००६) समाप्तिः । इदानीं भारते ३६०० व्याघ्राः स्युः इति भाव्यते । १९८९ तमे वर्षे ८३० व्याघ्राः आधिक्येन आसन् । एते व्याघ्राः ३७,८०० चतुरस्र-कि.मी परिमिते प्रदेशे २७ व्याघ्राभयारण्येषु वसन्ति । स्वातन्त्र्यात् पूर्वं भारते ४०,००० व्याघ्राः आसन् ।



## भारतं चीनाम् अतिशयिष्यते जनसङ्ख्यया

जनसङ्ख्याक्षेत्रे भारतं चीनादेशम् अपि अतिशयिष्यते अचिरात् एव । २००४ तमस्य वर्षस्य परिष्कृतजागतिकजनसङ्ख्या-विवरणं गते फेब्रवरीमासे प्रकाशितम् । तत्र उक्तम् अस्ति यत् २०५० तमवर्षाभ्यन्तरे भारतस्य जनसङ्ख्या १६० कोटिमिता भवेत् इति । तस्मिन् एव काले चीनादेशस्य जनसङ्ख्या १४० कोटिमिता भवेत् । २०३० तमवर्षात् कानिचन वर्षाणि यावत् उभयोः अपि देशयोः जनसङ्ख्या प्रायः समाना भवेत् इति तत्र उक्तम् अस्ति । गते जनवरीमासे षष्ठे दिनाङ्के चीनादेशस्य जनसङ्ख्या १३० कोटिमिता जाता । झाङ्ग्टाङ्ग् वर्येण प्राप्तः शिशुः एव १३० कोटितमः । झाङ्ग्टाङ्गः बीजिङ्गीये चिकित्सालये अपत्यजननवार्तां श्रुत्वा अवदत् - ''मादृशः परमसन्तुष्टः जनः अद्य जगति अन्यः नास्ति'' इति ।

*अन्यदेशीया अनुश्रुता कथा*
*(ग्रीस्‌देशीया)*

# अपूर्वौ वरौ



प्राचीने काले ग्रीसदेशे रोमदेशे च विविधाः देवाः पूज्यन्ते स्म । तेषां पूजा इदानीं न प्रचलति । एतादृशेषु देवेषु अन्यतमा आसीत् हीरा । सा विवाहकाले प्राधान्येन पूज्यते स्म । महिलानाम् आराध्यदेवता आसीत् सा ।

हीरायाः मन्दिरं पर्वतस्य उपरि आसीत् । पर्वदिने तु शतशः महिलाः एतत् मन्दिरं प्रति आगच्छन्ति स्म । तादृशे प्रसङ्गे प्रधानार्चिका पूजाविधिं निर्वर्तयति स्म । तां पूजां सर्वाः महिलाः सश्रद्धं पश्यन्ति स्म ।

अर्चिकायाः गृहम् देवालयात् किञ्चिद्दूरे ग्रामे अस्ति । तस्याः उभौ पुत्रौ अपि स्तः । यदा वार्षिकोत्सवः आसन्नः तदा अकस्मात् अर्चिका अस्वास्था जाता । पूर्वस्मिन् दिने अपि तस्याः अस्वास्थ्यं न अपगतम् । वार्षिकोत्सवदिने तु मन्दिरे उपस्थातव्यम् एव आसीत् तया । यतः शतशः सहस्रशः च भक्ताः तत्र सम्मिलन्ति । किन्तु अस्वास्थ्यकारणतः अर्चिका पादाभ्यां मन्दिरं गन्तुं न शक्नोति स्म । अतः महता प्रयासेन तस्याः पुत्रौ पार्श्वग्रामे एकं शकटं प्राप्तवन्तौ । किन्तु वाहकौ अश्वौ न प्राप्तौ । शकटस्य वहनाय वृषभौ अपि ग्रामे न प्राप्तौ ।

यथा यथा सायङ्कालः आसन्नः तथा तथा अर्चिकायाः असहना प्रवृद्धा । प्रातःकालाभ्यन्तरे यदि मन्दिरं न प्राप्येत तर्हि देवस्य विषये अनादरः प्रदर्शितः भवेत् । तस्याः सहायिकाः स्वतन्त्रतया पूजादिनिर्वहणे असमर्थाः आसन् । अतः तस्याः अनुपस्थितिः तु शताधिकानां भक्तानां निराशतायै भवेत् ।

एतत् अवगच्छन्तौ अर्चिकायाः पुत्रौ बिटोनः क्लियोबिसः च किञ्चित्कालं समालोच्य एतदर्थं विशिष्टं कमपि मार्गं चिन्तितवन्तौ । ततः तौ मातुः प्रकोष्ठं गत्वा उक्तवन्तौ – ''अम्ब ! शकटः सज्जः अस्ति । भवती शकटम् आरोहतु तावत्'' इति ।

''मम विश्वासः आसीत् एव यत् भवन्तौ निश्चयेन कामपि व्यवस्थां करिष्यतः एव

इति'' इति वदन्ती सा प्रकोष्ठात् बहिः आगत्य शकटे उपविष्टवती ।

तावता अन्धकारः प्रसृतः आसीत् इत्यतः शकटं कौ वहतः इति सा न लक्षितवती एव । सा पुत्रौ उक्तवती - ''भवन्तौ अपि शकटे उपविशताम्'' इति ।

''नैव । आवां पादाभ्याम् एव शकटम् अनुसरिष्यावः'' इति उक्तवन्तौ तौ ।

'यदि शकटस्य भारः अल्पः स्यात् तर्हि वेगेन गमनं शक्यते इति एतौ चिन्तितवन्तौ स्याताम्' इति अचिन्तयत् सा ।

शकटः वेगेन अगच्छत् । अर्चिका अल्पे एव काले निद्रां प्राप्तवती । उषःकाले तया जागरणं प्राप्तम् । 'पुत्रौ शकटसमीपे एव आगच्छन्तौ स्याताम्' इति चिन्तयन्ती सा पृष्ठतः दृष्टिं प्रसारितवती । किन्तु शकटस्य पृष्ठतः तया कोऽपि न दृष्टः । तया पुरतः दृष्टिः प्रसारिता । तदा तया शकटं वहन्तौ बिटोनः क्लियोबिसः च दृष्टौ । समग्रायां रात्रौ शकटं वहन्तौ तौ युक्ते काले मातरं मन्दिरसमीपम् आनेतुं शक्तवन्तौ आस्ताम् । सूर्योदयसमये तु तौ मातरं मन्दिरपार्श्वम् आनीतवन्तौ आस्ताम् ।



अर्चिका स्नात्वा पूजानिमित्तं सज्जा जाता । तया सह तौ पुत्रौ अपि मन्दिरं प्रविष्टवन्तौ । पूजादिसमाप्तेः अनन्तरम् अर्चिका देवीं प्रार्थितवती - ''भगवति ! मत्पुत्रसदृशाः मातृ-भक्ताः पुत्राः लोके कति सन्ति इति अहं न जाने । सङ्कल्पपूर्त्यै तौ महान्तं परिश्रमं कृत-वन्तौ । समग्रायां रात्रौ शकटम् आकर्षन्तौ तौ, न जाने कियत् श्रान्तौ इति । तयोः जीवने कदाचिदपि एतादृशं कष्टं यथा न आगच्छेत्, तौ सदा विश्रान्तिसुखम् एव यथा प्राप्नुयातां तथा वरेण अनुगृह्णातु भवती'' इति ।

''तथास्तु'' इति अशरीरवाणी सर्वैः स्पष्टतया श्रुता । यत्र स्थितं तत्रैव शयानौ पुत्रौ तया दृष्टौ अनन्तरक्षणे एव । सुदीर्घा निद्रा प्राप्ता आसीत् ताभ्याम् । निद्रां कुर्वन्तौ एव तौ केषाञ्चित् वर्षाणाम् अनन्तरं दिवं गतवन्तौ ।

आर्चिकायाः प्रार्थनायाः अनुगुणम् एव प्रवृत्तं सर्वम् अपि । जीवने पुनरपि ताभ्यां श्रान्तिः कष्टं वा न प्राप्ते एव ।

## पञ्जाबराज्यीया जानपदकथा

# स्थूलतायाः निवारणम्

राज्ञः राजाधिराजस्य देशः सुसमृद्धः । अतः तदीये शासने विशिष्टा समस्या कापि न आसीत् । तस्मात् राजा महार्घाणाम् आहाराणां, मद्यस्य च सेवने आसक्तः जातः । निरन्तरम् एतादृशस्य सेवनात् सः नितरां स्थूलः जातः । तस्य स्थौल्यं तावत् प्रवृद्धं यत् सार्वजनिकस्थले जनाः तं दृष्ट्वा बहुधा परिहसन्ति स्म । राजा एतं हासं न पश्येत् इति चिन्तयन्तः ते हासकाले मुखम् अन्याभिमुखं कुर्वन्ति स्म ।

यदा राजाधिराजः युवराजः आसीत् तदा जनाः मार्गपार्श्वे तिष्ठन्तः साभिमानं तं पश्यन्ति स्म । किन्तु इदानीं तथा नास्ति ।

पितुः दिवङ्गतेः अनन्तरं राजाधिराजः सिंहासनम् आरूढवान् । अचिरात् एव तेन ज्ञातं यत् सर्वे मन्त्रिणः परस्परम् असूयन्ति इति । तेषु एकैकोऽपि प्रधानमन्त्रिपदमात्रं प्राप्तुं प्रयतते स्म, न तु राज्यशासनं सम्यक् कर्तुम् । अतः तरुणः राजा कमपि प्रधानमन्त्रिणं न कृतवान् । यदा राजा निर्णयस्वीकारे विलम्बं कृतवान् तदा ते मन्त्रिणः कार्येषु अनासक्तिं दर्शितवन्तः । द्वित्राणां चतुराणां मान्त्रिणां साहाय्येन राजा शासननिर्वहणम् अकरोत् । प्रधानमन्त्रित्वेन कोऽपि न चितः एव तेन । अतः सर्वे मन्त्रिणः यथेच्छं व्यवहारम् आरब्धवन्तः । राजा अपि कस्यापि निग्रहं निरोधं वा न कृतवान् । तस्मात् तैः मन्त्रिभिः अधिका अधिकारशक्तिः प्राप्ता । एतस्मात् तेषाम् अन्तःकलहः किञ्चिदिव उपशान्तः । एतेन राजा अचिन्तयत् यत् मया इदानीम् अवश्यम् अवलोकनीयं किमपि कार्यं नास्ति इति । अतः सः खादनसुखानुभवे मग्नः जातः ।

यदा शासनव्यवहारविषये चर्चार्थं मन्त्रिणः निमन्त्र्यन्ते तदा ते मन्त्रिणः अपि कष्टेन एव



हासं निरुन्धन्ति स्म ।

अथ कदाचित् राजा विश्वासार्हं कञ्चित् मन्त्रिणम् एकान्ते अपृच्छत् - ''जनाः मां दृष्ट्वा किमर्थं हसन्ति ?'' इति ।

''यदि भवता न कुप्येत, यदि च अभयं दीयेत, तर्हि अहं वस्तुस्थितिं वदेयम्'' इति भीत्या एव अवदत् सः मन्त्री ।

''अभयं ते दत्तम् अस्ति । निर्भयं वदतु तावत्'' इति अवदत् राजा ।

तदा मन्त्री अवदत् - ''महाराज ! स्वस्य स्थौल्यं किं कदाचित् लक्षितं भवता ?'' इति ।

राजा सकृत् स्वस्य स्थूलं कायं दृष्ट्वा अवदत् - ''स्वस्य स्थूलकायताविषये अभिमानं वहामि अहम् । तदस्तु, इदानीं मया किं करणीयम् इति अभिप्रैति भवान् ?'' इति ।



''भवता स्थूलताजनकानां पदार्थानां सेवनं स्थागनीयं महाराज !'' इति विनयेन निवेदितवान् सः मन्त्री ।

मन्त्रिणः कथनं सर्वथा निराकुर्वन् अवदत् राजा - ''सर्वथा अशक्यम् एतत्'' इति ।

अन्यः कः उपायः सूचनीयः इति अजानन् मन्त्री मौनेन अतिष्ठत् ।

तदा राजा एव पुनः अवदत् - ''किं करणीयम् इति जानामि अहम् । अहम् इव मम प्रजाः अपि उत्तमम् आहारं सेवमानाः स्थूलाः भवेयुः । अतः अद्यैव उद्घोषणं कारयतु यत् देशे सर्वे आहारपदार्थाः अल्पेन मूल्येन विक्रेतव्याः इति । जनाः अभीष्टम् आहारं यथेच्छं खादन्तु नाम । भवता एतदपि घोषणीयं यत् अग्रिमानां षण्णां मासानाम् अनन्तरम् अपि यः कृशकायः एव स्थास्यति सः अवश्यं दण्डयिष्यते इति'' इति ।

राज्ञः आज्ञा सर्वत्र प्रसारिता । जनेषु कोऽपि कारागारं गन्तुं न इच्छति स्म । अतः ते प्रभूततया खादितवन्तः पीतवन्तः च । तस्मात् अल्पे एव काले देशे मार्गेषु स्थूलकायाः एव दृश्यन्ते स्म । राजा यदा सञ्चाराय राजमार्गेण गच्छति तदा मार्गम् उभयतः स्थूलाः पुरुषाः महिलाः च दृश्यन्ते स्म । एतस्मात् राजा सन्तुष्टः ।

किन्तु एषः सन्तोषः दीर्घकालं यावत् न अतिष्ठत् । यतः तस्य पुत्री मालविका, या पूर्वं परमसुन्दरी आसीत् सा, इदानीं परमस्थूलतां प्राप्य असुन्दरी जाता । एतत् राजा न असहत । सः मन्त्रिणां मार्गदर्शनम् अपृच्छत् ।



तदा मन्त्रिणः अवदन् यत् राजकुमार्याः राजाज्ञायाः अन्वयः न चिन्तनीयः, तेन सा कृशा भवेत् इति ।

किन्तु राजकुमारी आहारसेवने निग्रहं कर्तुं न शक्तवती । अतः तस्याः स्थूलता न्यूना न जाता एव ।

राजा अचिन्तयत् यत् स्थूलता-निवारणाय वैद्यकीये क्षेत्रे कोऽपि उपायः भवितुम् अर्हति इति । अतः सः उदघोषयत् यत् यः राजकुमार्याः स्थौल्यं निवारयिष्यति तस्मै उत्तमः पुरस्कारः दास्यते इति । सः एतदपि अघोषयत् यत् यदि वैद्यः कृशकायः स्यात् तर्हि तस्मै एव राजकुमारी दास्यते, सः एव भावी राजा अपि भविष्यति इति । यः प्रयत्नं कृत्वा असाफल्यं प्राप्नोति तस्य शिरसः छेदः करिष्यते इत्यपि घोषणा कारिता तेन ।

एतत् श्रुत्वा वैद्याः सर्वे कथञ्चित् राज्ञः मेलनं निवारितवन्तः । दिनानि, सप्ताहाः, मासाः च अतीताः । राज्ञः, राजकुमार्याः, मन्त्रिणां, प्रजानां च स्थौल्यं वर्धमानम् एव आसीत् ।

अथ कदाचित् केचन सैनिकाः राजधान्याः समीपे स्थिते अरण्ये औषधसस्यानि अन्विष्यन्तं कञ्चित् कृशकायं तरुणं वैद्यम् आस्थानं प्रति आनीतवन्तः । सः प्रतिवेशिराज्यस्य वैद्यः । औषधसस्यविशेषस्य अन्वेषणं कुर्वन् सः अत्र आगतः आसीत् ।

तस्य दर्शनात् राजा नितरां सन्तुष्टः । यतः सः कृशकायः सुन्दरः च आसीत् । सः राजकुमारीम् अदृष्ट्वैव उक्तवान् - ''एतस्मिन् देशे सर्वे स्थूलाः स्थूलतमाः च दृश्यन्ते । अतः अहम् अरण्यम् एव प्रतिगच्छामि'' इति ।

''नैव । न शक्यते एतत् । मया सह आगच्छतु भवान् । अपूर्वम् उपायनं को वा विवेकी तिरस्कुर्यात् ? यदि मम पुत्री स्वस्था भवेत् तर्हि भवान् एव तां परिणेतुम् अर्हेत्, सिंहासनम् आरोहेत् च'' इति वदन् राजा तम् आकृष्य पुत्र्याः प्रकोष्ठं प्रति नीत्वा - ''पश्यतु, एषा एव अस्ति मम पुत्री । एतस्याः स्थौल्यं निवारणीयं भवता । तदर्थं यद्यत् आवश्यकं तत् आनीय दास्यामि अहम्'' इति अवदत् ।

वैद्यः तस्याः नेत्रे मुखं च आदौ परीक्षितवान् । हस्तः, नाडी इत्यादयः अपि परीक्षिताः । एतस्याः कोऽपि रोगः नास्ति इति निर्णीय सः मुखम् उन्नीय अवदत् - ''महाराज ! विषादस्य विषयः नाम एषा त्र्युत्तरशतं दिनानि जीविष्यति,



न तु ततोऽपि अधिकम् । अतः एतस्याः चिकित्सया न किमपि प्रयोजनम्'' इति ।

एतां वार्तां श्रुत्वा राजा, राजकुमारी, तत्र स्थिताः अन्ये च नितरां दिग्भ्रान्ताः । राजा क्षणकालस्य अनन्तरम् अवदत् - ''भवतः ज्ञानस्य विषये मम आदरः अस्ति । तथापि मम पुत्री यदि त्र्युत्तरशताधिकदिनानि जीवेत् तर्हि भवतः शिरः कर्तितः भवेत् । तावत् कारागारे स्थातव्यं भवता'' इति ।

अचिरात् एव मरणं भविष्यति इति वचनं मालविकायां महत् परिणामम् अकरोत् । अतः आमोदप्रमोदादिषु तस्याः आसक्तिः लुप्ता जाता । आहारे अपि आसक्तिः नष्टा । बलात् किञ्चिदेव सेवते स्म सा । जलमात्रम् आहारः आसीत् प्रायः तस्याः । राज्ञः दशा अपि तादृशी एव । तस्मै अपि आहारः न अरोचत । अतः तेनापि प्राणधारणाय किञ्चित् एव आहारः सेव्यते स्म ।

एवमेव शतं दिनानि अतीतानि । राजा पुत्र्याः मुखम् एव द्रष्टुं न इष्टवान् । तस्याः म्लानं मुखं सर्वथा द्रष्टुं न शक्नोति स्म सः । किन्तु तस्याः स्वास्थ्यविषये वार्तां तु सदा प्राप्नोति स्म परिचारिकाणां द्वारा ।

एकोत्तरशततमे दिने काचन परिचारिका आगत्य राजानम् अवदत् - ''महाराज ! राजकुमारी अद्य स्मेरानना दृश्यते । मम दीर्घजीवनम् अस्ति इति वदति सा'' इति । एतत् श्रुत्वा राजा कण्ठस्थं सुवर्णहारं निष्कास्य तस्यै दत्तवान् ।

अनन्तरदिने अपरा परिचारिका आगत्य राजानम् अवदत् - ''महाराज ! बहूनां दिनानाम् अनन्तरं राजकुमारी अद्य स्वयं पृष्ट्वा भोजनम् आनाय्य सेवितवती'' इति ।

राजा ताम् अपि सत्कृत्य अवदत् - ''भवती मालविकां वदतु यत् श्वः अहं तां द्रक्ष्यामि इति'' इति ।

तस्याः निर्गमनस्य अनन्तरं राज्ञः मनसि विचारः आगतः - 'वस्तुतः अपि मम पुत्री श्वः सूर्योदयं किं द्रष्टुं शक्नुयात् ?' इति ।

अनन्तरदिने प्रातः राजा पुत्रीं द्रष्टुं प्रस्थानाय उद्युक्तः । तावता मालविका एव सखीभिः परिवृता सती तत्र उपस्थिता ।

तां दृष्ट्वा आश्चर्यम् अनुभवन् राजा अवदत् - ''अहो, अपूर्वं सौन्दर्यं प्राप्तम् अस्ति भवत्या'' इति ।

''तात ! तं वैद्यम् अहं द्रष्टुम् इच्छामि'' इति अवदत् मालविका ।

''अवश्यं तम् अत्र आनाययिष्यामि । असमीचीनं वचनम् उक्तवतः तस्य दुष्टस्य

शिरः अद्यैव कर्तयिष्यामि अपि'' इति अवदत् राजा ।

''अहं जीवामि एव । एवं स्थिते तस्य शिरश्छेदः किमर्थं करणीयः ? वस्तुतः तेन वैद्येन अस्माकम् उपकारः एव कृतः अस्ति । मम स्थौल्यं निवारितम् अस्ति तेन । अतः भवता सः सत्करणीयः'' इति अवदत् राजकुमारी ।

राज्ञा अचिरात् एव वैद्यः आनायितः । राजा तम् अवदत् - ''भवतः भविष्यवचनं वितथं जातम्'' इति ।

तदा वैद्यः हसन् अवदत् - ''महाराज ! राजकुमारी सुन्दरतया दृश्यते खलु ? तस्याः स्थौल्यं क्व गतम् ? भवान् स्वस्य स्थौल्यं सकृत् परिशीलयतु । भवतः स्थूलता कथम् अदृश्यतां गता ? शरीरे उल्लाघता अनुभूयते खलु भवता ?'' इति ।

राजा स्वस्य शरीरं सकृत् दृष्ट्वा अवदत् - ''भवतः कथनं युक्तम् अस्ति । कथम् एतत् परिवर्तनं सम्पन्नम् ?'' इति ।

''महाराज ! एतदर्थं मया कापि चिकित्सा तु न कृता । भवान् स्थौल्यजनकान् आहारपदार्थान् यथा न सेवेत तथा स्थितिः उद्भाविता मया । आहारः एव स्थौल्यस्य मूलं कारणम् । अतः मम नम्रं निवेदनं यत् भवता इतःपूर्वं या आज्ञा कृता आसीत् सा कृपया प्रतिस्वीकरणीया इति । जनाः अपेक्षानुगुणम् आहारस्य सेवनाय स्वतन्त्राः भवन्तु नाम'' इति ।

''तां मम आज्ञाम् अद्य एव प्रतिस्वीकरिष्यामि । तथैव मया दत्तं वचनम् अपि पालयिष्यामि । भवतः राजकुमार्याः च विवाहं निर्वर्तयिष्यामि अचिरात् एव'' इति अवदत् राजा ।

ततः अचिरात् एव वैद्यराजकुमार्योः विवाहः महता वैभवेन सम्पन्नः । राजा स्वस्य प्रतिज्ञायाः अनुगुणं जामातरं सिंहासने उपवेशितवान् ।

कदाचित् सिंहासने उपविष्टः नूतनः राजा अरण्ये औषधसस्यानाम् अन्वेषणं कुर्वतः स्वस्य पूर्वतनीं स्थितिं स्मृत्वा मनसि एव हसितवान् ।



# मातुः वात्सल्यम्

पद्मपुरं शिवपुरं च अनतिदूरे स्थिते नगरे । तथापि तयोः निवसतां जनानाम् आचारे, व्यवहारे च महत् अन्तरम् आसीत् । शिवपुरस्य जनाः कटुप्रियाः, किन्तु पद्मपुरस्य जनाः सात्त्विकाहारप्रियाः, मधुरप्रियाः च ।

कदाचित् शिवपुरीया प्रभा पद्मपुरीयाय चन्द्राय दत्ता । चन्द्रस्य गृहे सर्वे उत्तमस्वभावयुक्ताः एव । तथापि प्रभायाः तत्र महान् क्लेशः । स च आसीत् आहारविषये । तस्मिन् गृहे कोऽपि कटु न खादति स्म । अतः प्रभा सदा मातापितरौ स्वस्य कष्टं वदति स्म । मातृगृहात् उपसेचनचूर्णावलेहादिकं तदा तदा आनाययति स्म सा ।

मयूरपुरी शिवपुरात् सुदूरे अस्ति । कदाचित् राजप्रतिनिधिना सह गन्तव्यम् अभवत् चन्द्रेण । सः सकुटुम्बं मयूरपुरीम् अगच्छत् । चत्वारि वर्षाणि तत्र अवसत् च । तदवसरे प्रभा मातृगृहम् एकवारम् अपि गन्तुं न शक्तवती । तस्याः त्रिवर्षीया पुत्री अपि अस्ति इदानीम् ।

जामाता पुत्री च पद्मपुरं प्रत्यागतौ इति वार्ता श्रुत्वा प्रभायाः मातापितरौ तौ द्रष्टुम् आगतौ । तौ आगमनसमये कटुतोपेतम् अवलेहम् अपि आनीतवन्तौ आस्ताम् । यतः तादृशः अवलेहः नितरां प्रियः आसीत् प्रभायाः ।

प्रभा कटुतोपेतम् अवलेहं दृष्ट्वा पितरौ अवदत् - ''मम पुत्री कटुतायुक्तं किमपि न खादति । भवद्भ्याम् अपि कटुतासेवनं न्यूनीकरणीयम् । पश्चिमे वयसि सात्त्विकाहारसेवनम् एव वरम्'' इति ।

''वत्से ! एतस्मिन् अवलेहे कटुता स्यात् । किन्तु तत् गौणम् । अत्र प्राधान्येन मातुः वात्सल्यं निहितम् अस्ति । तत् स्मरतु तावत्'' इति अवदत् प्रभायाः पिता ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् –**



सुभाषस्य ग्रामात् अनतिदूरे एव अस्ति गौतमस्य ग्रामः । तौ च सुहृदौ । कदाचित् तौ विपण्यां मिलितौ । उभाभ्याम् अपि गर्दभः क्रेतव्यः आसीत् । अतः तौ सम्भूय गत्वा गर्दभम् एकैकं क्रीत्वा ग्रामं प्रतिगतौ । ग्रामम् आगतः सुभाषः स्वस्य गदर्भं 'खाद' 'उत्तिष्ठ' 'गच्छ' इत्यादीः आज्ञाः बोधयितुं प्रयासं कृतवान् । किन्तु तस्य बोधनस्य अनुगुणं गर्दभेन न व्यवहृतम् ।

पक्षानन्तरं सुभाषः गौतमश्च पुनरपि विपण्यां मिलितौ । ''भवतः गर्दभः कथं व्यवहरति ?'' इति गौतमम् अपृच्छत् सुभाषः ।

''सम्यक् एव व्यवहरति सः । मम आज्ञा सम्यक् पाल्यते तेन'' इति अवदत् गौतमः ।

''अहो, आश्चर्यम् ! मम गर्दभेन तु बोधितं किमपि न अवगतम्'' इति अवदत् सुभाषः ।

अग्रे किं प्रवृत्तं स्यादिति चिन्तयन्तः १०० - १५० शब्दैः एतां कथां पूरयन्तु भवन्तः । गर्दभस्य बोधनाय कीदृशी भाषा उपयोक्तव्या इति सूचितवान् स्यात् गौतमः इति चिन्तयन्तः भवन्तः कथायाः योग्यं शीर्षकम् अपि चिन्तयन्तु । कथाप्रेषणावसरे पिहितपत्रस्य उपरि 'Story contest' इति अवश्यं लिखन्तु ।

**अन्तिमः दिनाङ्कः - ३१, अक्टोबर् - २००५**

नाम ------------------------ वयः ---------- जन्मदिनाङ्कः -------------

विद्यालयः ---------------------------------- कक्ष्या --------------

गृहसङ्केतः------------------------------------------------------

----------------------------------------------------------------

------------------------------Pincode ----------------------

पोषकस्य हस्ताक्षरम्      भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# विश्वासघातः

ब्रह्मदत्तः यदा काशीराज्यं पालयन् आसीत् तदा बोधिसत्त्वः पण्डितामात्यरूपेण जन्म प्राप्तवान् आसीत् ।

कदाचित् काशीराजः ब्रह्मदत्तः पुत्रविषये कुपितः सन् तं देशात् निष्कासितवान् । राजकुमारः पत्न्या सह इतस्ततः अटन् बहूनि कष्टानि अनुभूतवान् । वासार्थं गृहम् उदरपूरणाय भोजनं वा न आसीत् चेदपि तस्य साध्वी पत्नी विना प्रतिवचनं सर्वाणि कष्टानि शान्त्या सोढवती ।

केषाञ्चित् वर्षाणाम् अनन्तरं ब्रह्मदत्तस्य मरणं जातम् । पितुः मरणस्य वार्तां श्रुत्वा राजकुमारः नितरां सन्तुष्टः । काशीं गत्वा मया अचिरात् एव सिंहासने उपवेष्टव्यम् इति चिन्तयन् सः वेगेन प्रस्थितवान् ।

तस्य पत्नी वेगेन गन्तुं न शक्नोति स्म । किन्तु राजकुमारः एतत् न अवगतवान् एव । तस्य नेत्रयोः पुरतः सिंहासनम् एकम् एव नृत्यति स्म । अतः विश्रान्तिः आहारः इत्यादयः पत्न्या प्राप्ताः वा न वा इत्यपि अचिन्तयन् सः वेगेन अग्रे अगच्छत् ।

महती सिंहसनप्राप्त्याकाङ्क्षा अस्ति चेदपि विश्रान्तिम् आहारं च विना बहुदूरं गन्तुं न शक्यते खलु ? बुभुक्षा श्रान्तिः च राजकुमारम् अपि अबाधत । महता कष्टेन तौ कञ्चित् ग्रामं प्राप्तवन्तौ ।

तत्र केचन ग्रामीणाः तयोः दुरवस्थां दृष्ट्वा उक्तवन्तः - ''महाशय ! भवन्तौ बुभुक्षया पीड्यमानौ सन्तौ एव प्रयाणं कुरुतः इति भाति । वयं पाथेयं सज्जीकृत्य दास्यामः । कृपया नीयताम्'' इति ।

एतत् अङ्गीकुर्वन् राजकुमारः पत्नीं कुत्रचित् उपवेश्य आहारस्य आनयनाय तान् ग्रामीणान् अनुसृतवान् । ते पर्णैः आहारबन्धं सज्जीकृत्य तस्मै दत्तवन्तः ।

आहारबन्धं स्वीकृत्य प्रत्यागच्छन् राज-

कुमारः अचिन्तयत् – 'एतैः दीयमानः आहारः उभाभ्याम् अपि यदि सेव्येत तर्हि अचिरात् एव पुनरपि बुभुक्षा बाधेत । पुनः आहारः कदा प्राप्येत इति न ज्ञायते । इतोऽपि दूरप्रयाणं तु करणीयम् अस्ति । मम प्रयाणे एषा पत्नी विघ्नायते । तया काशी न प्राप्येत चेदपि न हानिः । मया तु काशी प्राप्तव्या एव । अतः एषः समग्रः आहारः मया एव सेव्येत चेत् वरं स्यात्' इति ।

एवं विचिन्त्य सः पत्न्याः समीपं गत्वा अवदत् – "भवती अग्रे गच्छतु । अहं कालकृत्यानि समाप्य अचिरात् एव भवतीम् अनुसरिष्यामि" इति ।



तस्य आदेशं पालयन्ती पत्नी ततः प्रस्थितवती । अनन्तरं राजकुमारः समग्रम् आहारं खादित्वा पर्णबन्धं यथापूर्वं बद्ध्वा वेगेन पदानि स्थापयन् पत्न्याः समीपं गतवान् ।

पत्नी आशापूर्णया दृष्ट्या यदा आहारबन्धं दृष्टवती तदा राजकुमारः कोपम् अभिनयन् – "अहो, एतेषां ग्रामीणानां धूर्तता ! ते रिक्तं पत्रबन्धं दत्तवन्तः सन्ति, पश्यतु" इति वदन् रिक्तं पत्रबन्धम् उद्घाट्य दर्शितवान् ।

पत्नी तस्य वञ्चनापूर्णं व्यवहारं यद्यपि ज्ञातवती, तथापि किमपि अजानती इव मौनेन स्थितवती । पुनः द्वित्राणां दिनानां यात्रायाः अनन्तरं काशी प्राप्ता ताभ्याम् ।

राजकुमारः यथाशास्त्रं स्वस्य पट्टाभिषेकं कारयित्वा राजपदवीम् अलङ्कृतवान् । भोगव्यवहारे मग्नः सः पत्न्याः उपस्थितिम् एव विस्मृतवान् । दुःखेषु या सहभागिनी आसीत् तस्यै सुखे अपि सहभागः दातव्यः इत्यंशः तेन न स्मृतः एव । पत्न्या राजयोग्यः आहारः प्राप्यमाणः अस्ति किम्, तया राजोचितानि वस्त्राणि ध्रियमाणानि सन्ति किम् इत्यादिकं तेन न चिन्तितम् एव । अतः प्रासादे वसन्त्याः अपि तत्पत्न्याः चिन्ता तु न अपगता ।

राज्ञः आस्थाने स्थितः पण्डितामात्यः राज्ञ्याः एतां चिन्ताम् अल्पे एव काले लक्षितवान् । अतः कदाचित् सः तया मेलितुं गतः । राज्ञी तं यथोचितं स्वागतीकृत्य आसनादिदानेन सत्कृतवती ।

पण्डितामात्यरूपी बोधिसत्त्वः अवदत् – "महाराज्ञि ! कष्टानि अपगतानि इत्यतः राजा मह्यं विविधानि उपायनानि दत्तवान् । किन्तु भवत्या तु अद्यावधि किमपि न दत्तम्" इति ।

"महानुभाव ! अहं नाममात्रेण राज्ञी अस्मि अत्र । वस्तुतः तु अत्रत्यायाः दास्याः मम च

न कोऽपि भेदः । कष्टे यथा, तथैव राज्ञः सुखभोगादिषु या सहभागं न प्राप्नोति सा राज्ञी कथं भवेत् ?'' इति वदन्ती अश्रूणि स्रावयन्ती राज्ञी काशीं प्रति आगमनसमये तेन कृतं दुर्व्यवहारं श्रावयित्वा पुनः अवदत् - ''इदानीम् अपि मम पतिः मयि अवधानवान् नास्ति । मम आहारविषये, वस्त्रविषये, स्थान-विषये वा न चिन्तयति एव सः'' इति ।

तां सान्त्वयित्वा बोधिसत्त्वः अवदत् - ''महाराज्ञि ! अलं चिन्तया । वस्तुस्थितिं भवत्याः मुखात् ज्ञातुम् एव मया अत्र आगतम् । श्वः पूर्णायां सभायाम् अहं भवतीम् एतान् एव प्रश्नान् प्रक्ष्यामि । भवती निर्भयम् उत्तरं ददातु । ततः भवत्याः कष्टानि अपगतानि भविष्यन्ति'' इति ।

अनन्तरदिने राज्ञी यदा राजसभाम् आगता तदा बोधिसत्त्वः अवदत् - ''राज्ञीपदं प्राप्तवती भवती सेवकानां विषये न चिन्तयति एव । एतत् किमर्थम् ?'' इति ।

तदा राज्ञी सर्वं विवृतवती सभायाम् । पत्न्याः भागः अपि खादितः इत्येषः अंशः सर्वैः ज्ञातः इत्यतः राजा नितराम् अपमानं प्राप्तवान् ।

राज्ञ्याः कथनं श्रुत्वा बोधिसत्त्वः अवदत् - ''महाराज्ञि ! येन पत्न्याः सुखदुःखादिकं न विचार्यते तेन सह भवत्या स्थातव्यं नास्ति । श्लोकः कश्चन एवं श्रूयते -

*त्यजेन्नरं तं परिहीणवन्तं*
*न चादरः स्यान्न हि भक्तिरस्मिन् ।*
*खगो द्रुमं क्षीणफलं विहाय*
*समेति चान्यं विपुलो हि लोकः ॥* इति ।

अतः यः पत्न्याम् आदरवान् न, तस्मिन् प्रीतिः दर्शनीया नास्ति । पक्षी अपि फलहीनं वृक्षं परित्यजति । लोकः विशालः अस्ति । अतः आश्रयः तु कुत्रचित् प्राप्येत एव'' इति ।

एतानि वचनानि श्रुत्वा पश्चात्तापेन दग्धः राजा सिंहासनात् अवतीर्य बोधिसत्त्वस्य पादौ गृहीत्वा - ''पण्डितामात्यवर्य ! मम अपराधः कृपया क्षन्तव्यः । यत् प्रवृत्तं तद्विषये नितरां खिन्नोऽस्मि अहम् । इतःपरं पत्न्याः विषये धर्म्यं व्यवहारं करिष्यामि'' इति ।

तस्मात् दिनात् राज्ञः व्यवहारे पूर्णं परिवर्तनं जातम् । पत्नीम् आदरेण पश्यन् सः सुखेन जीवितवान् ।





# विष्णुपुराणम्

कपिलवस्तुनगरतः सुदूरं गतः सिद्धार्थः स्वकीयम् उत्तरीयम्, आभरणानि, खड्गं च निष्कास्य चेन्नस्य हस्ते यच्छन् उक्तवान् - ''चेन्न ! भवान् मम प्रणामान् पितरं निवेदयतु । तम् एतदपि निवेदयतु यत् सिद्धार्थः विशाले विश्वे पदार्पणं कृतवान् अस्ति, सः समस्तप्राणिनां दुःखनिवारकः धर्मचक्रवर्ती भूत्वा कपिलवस्तुनगरं पुनरपि आगमिष्यति, सिद्धार्थनाम्नः सार्थकतासम्पादिकां सिद्धिं प्राप्तुं भवदीयः पुत्रः आशीर्वादं प्रार्थयति इति'' इति ।

चेन्नः किमपि वक्तुम् असमर्थः । तस्य नेत्राभ्यां निरन्तरम् अश्रुधारा प्रवहति । एतत् दृष्ट्वा खेदम् अनुभवन् सिद्धार्थः उक्तवान् - ''चेन्न ! मातृप्रेमतः वञ्चितं मां भवान् बाल्यतः पोषितवान् । अङ्के उपवेश्य लालयता भवता मदीयाः इच्छाः सर्वाः पूरिताः । मात्रा इव वात्सल्यं प्रदर्शितम् अपि । भवदीयम् उपकारम् अहं कथं वा विस्मरेयम् ? दैवयोगात् यदि मया सिद्धिः प्राप्येत तर्हि तत्र भवतः सहयोगः सर्वप्रथमम् उल्लेखयिष्यते । इदानीं गृहं गच्छतु भवान्'' इति ।

चेन्नस्य स्कन्धम् आस्फालयन् सिद्धार्थः तं राजधानीं प्रतिप्रेषितवान् ।

चेन्नः किञ्चित्कालं यावत् तत्रैव स्थितवान् । तस्य मनः दुःखपीडितम् आसीत् । यं राजकुमारं सः बाल्यात् आरभ्य लालितवान्, यस्य च बालचेष्टाः युवकव्यवहाराः च दृष्टाः, तादृशः राजकुमारः इदानीं सर्वं त्यक्त्वा गच्छन् अस्ति । किन्तु चेन्नः किं वा कर्तुं शक्नुयात् ? किञ्चित्कालं तत्र स्थित्वा ततः भारभूतानि पदानि स्थापयन् सः रथसमीपम् आगतवान् ।



सिद्धार्थः स्वकीयं महाप्रस्थानम् आरब्ध-वान् । उषःकालः आसन्नः ।

राजधानीम् आगतः चेन्नः सिद्धार्थस्य वार्ता शुद्धोदनं निवेदितवान् । एतत् श्रुत्वा शुद्धोदनः मूर्च्छावस्थां गतवान् ।

यशोधरा पुत्रं राहुलं वक्षसा आलिङ्ग्य - ''पुत्र ! भवता अपि पितुः प्रस्थानं निरोद्धुं न शक्तं खलु'' इति वदन्ती रोदनं कृतवती । किञ्चित्कालानन्तरं कथञ्चित् दुःखं निगृह्य पतिदेवस्य मुखमण्डलं महापुरुषलक्षणाङ्कितं स्मरन्ती सा उत्थितवती । स्वीयया परिचर्यया श्वशुरस्य उपचारं कृतवती ।

''महाराज ! भवान् भवतः पुत्रं मानवं न चिन्तयतु । सः शाक्यवंशं पावयिष्यति । भवान् यथा कपिलवस्तुराज्यस्य हितं सदा चिन्तयति, तथैव भवतः पुत्रः विशालस्य प्रपञ्चस्य हितं चिन्तयति । जगतः उद्धारार्थं सः गौतमसिद्धार्थरूपेण भूलोकम् आगतवान्, राजधानीं त्यक्त्वा गतवान् च'' इति ।

यशोधरायाः वचनेन शुद्धोदनः सत्यं ज्ञात-वान् इव । सः अश्रूणि मार्जयन् उत्थित-वान् । तदा यशोधरा राहुलं श्वशुरहस्ते अर्पयन्ती उक्तवती - ''एषः भवतः पुत्रस्य प्रतिरूपम्'' इति ।

यशोधरा मनसि सङ्कल्पं कृतवती - 'राहुलः सम्यक् अनुशासनपूर्वकं पालनीयः । एतस्य पितुः नाम सार्थकं यथा स्यात् तथा एषः वर्धनीयः मया । एतत् मम कर्तव्यम्' इति ।

समस्तजगतः उद्धारकं तत्त्वम् अन्विष्यन् सिद्धार्थः अनेकानि कष्टानि सहमानः बहुषु प्रदेशेषु अटितवान् । अस्मिन् अवसरे एकदा बुभुक्षया पिपासया च सः मूर्च्छां गतः । तदा कश्चित् गोपालकः क्षीरदानपूर्वकं तं रक्षित-वान् । एतेन प्रसङ्गेन सिद्धार्थः प्राणरक्षणम् आद्यं कर्तव्यम् इति सत्यं ज्ञातवान् । समाजसेवा मम कर्तव्यम् इति निश्चितवान् च ।

भिक्षुरूपेण देशाटनं कुर्वन् सिद्धार्थः अनेकान् साधुसंन्यासिनः योगिनः अन्यान्य-मार्गानुयायिनः च दृष्टवान् । तद्द्वारा महत् ज्ञानम् अर्जितवान् सः । तेषां जनानां सम्पर्कतः सिद्धार्थस्य मनसि 'तपोद्वारा सर्वं सेत्स्यति' इति भावना उत्पन्ना ।

अतः सः कठोरे तपसि मग्नः जातः । तस्मिन् अवसरे सुजाता नाम गर्भवती तस्य समीपम् आगत्य - ''पुत्रः उत्पन्नः चेत् एतस्य तपस्विनः पुनर्दर्शनं करिष्यामि'' इति सङ्कल्पं कृतवती । तस्याः अभिलाषः पूर्णः । अतः सुजाता शिशुम् उन्नीय क्षीरफलादीनि अपि

स्वीकृत्य सिद्धार्थस्य समीपम् आगतवती ।

सा सिद्धार्थं प्रणम्य – ''भवतः अनुग्रहेण मया पुत्रः प्राप्तः'' इति वदन्ती सिद्धार्थेन निषिद्ध्यमाना अपि पुत्रेण तदीयपादस्पर्शं कारितवती ।

तदा सिद्धार्थः उक्तवान् – ''मातः ! भवती यथा चिन्तयति तथा अहं न महिमान्वितः पुरुषः । येन केनापि भावेन प्रेरिता भवती क्षीरादिकं दत्तवती स्यात् । किन्तु अहं तु 'भवती दयारूपिणी' इति एतावन्मात्रम् एव चिन्तयामि । भवत्याः आचरणेन अहं दयायाः महत्त्वं ज्ञातवान् । भवती प्रकृतिः इव पूज्यतमा माता'' इति ।

''भगवन् ! महात्मा भवान् आत्मनः महत्त्वं प्रकटयितुम् अनिच्छन् एवं वदति । भवान् महिमान्वितः पुरुषः इति तु अहं स्पष्टं जानामि । उत्तमकुलोत्पन्नः भवान् गोपकुलीयायाः मम गृहं यदि आगच्छेत् तर्हि ततोऽपि महत् भाग्यं किम् अन्यत् स्यात् मम ? सामान्यगृहिण्याः मम आतिथ्यं स्वीकरोतु कृपया । मदीयं पुत्रम् आशिषा अनुगृह्णातु च'' इति प्रार्थितवती सुजाता ।

''अम्ब ! अहं सत्यं वदामि – मम तपः अद्यापि न पूर्णम् । इदानीम् अपि अहं इतरे इव कश्चित् सामान्यः । मानवेषु उच्चनीच-भावना कदापि न प्रदर्शनीया । सर्वेषु जीवेषु यथा प्राणशक्तिः अभिन्ना तथा मानवता अपि अभिन्ना । यदा मम तपः सफलं भविष्यति, तदा एव अहम् अन्यान् आशिषा अनुग्रहीतुम् अर्हः भविष्यामि । तदा निश्चयेन भवत्याः अतिथिः भविष्यामि'' इति सान्त्वनवचनानि



उक्तवान् सिद्धार्थः ।

''एतत् आश्वासनं कदापि न विस्मर्तव्यम्'' इति पुनः पुनः वदन्ती सा सिद्धार्थं पुनः अपि नमस्कृत्य, तदीयचरणयोः स्पर्शं पुत्रेण पुनः कारयित्वा ततः निर्गता ।

क्रमशः तपःकर्मणि सिद्धार्थस्य विश्वासः न्यूनः जातः । तपसि लीनाः बहवः स्वार्थ-साधकाः आसन् । तेषु कोऽपि मानवहितं विश्वहितं वा न चिन्तयति । तपः नाम शरीरकष्टदायकम् आत्महत्यासदृशम् इति सः चिन्तितवान् । अतः सः निश्चितवान् यत् तपः त्यक्तव्यम् इति । एतत् ज्ञात्वा बहवः साधकाः तस्य उपहासं कृतवन्तः । ''गौतमः भ्रष्टः जातः'' इति प्रचारं कृतवन्तः च ।

बहवः साधकाः अद्भुतशक्तिं सम्पाद्य, इन्द्रजालादिकं प्रदर्शयन्तः जनान् आकर्षन्तः आसन् । वस्तुतः एतैः मानवकल्याणार्थं किमपि



साहाय्यं न आचरितम् । अज्ञाने अन्धविश्वासे च निमग्नानां जनानाम् उद्धारार्थं कोऽपि प्रयत्नः केनापि न कृतः ।

महाराजान् प्रलोभनेन वञ्चयन्तः एते यज्ञयागादीनां व्याजेन मांसाहारसेविनः सन्तः सज्जनान् अपि मार्गभ्रष्टान् कुर्वन्ति स्म ।

एतत्सर्वं सगाम्भीर्यं चिन्तयन् सिद्धार्थः स्वकर्तव्यं पुनः पुनः स्मरन् एकस्य विशालस्य अश्वत्थवृक्षस्य अधः उपविष्टः आसीत् । तथैव अन्तर्मुखतां गते तस्मिन् ज्ञानम् उदितम् ।

तद्दिनं वैशाखपूर्णिमा । सकलकलासहितः चन्द्रः आकाशे विराजते स्म । तदा एव गौतमेन बुद्धत्वं प्राप्तम् । परिपूर्णबुद्धरूपेण सः विकासं प्राप्तवान् ।

सिद्धार्थः ज्ञानोदयेन अनिर्वचनीयम् अनुभवं प्राप्तवान् । एतां ध्यानावस्थाम् एव सः परमनिर्वाणं चिन्तितवान् ।

ततः आरभ्य वैशाखपूर्णिमा बुद्धपूर्णिमानाम्ना जनप्रिया जाता । अश्वत्थवृक्षः बोधिवृक्षरूपेण पूज्यः जातः । गौतमः बोधिसत्त्वनाम्ना विख्यातः ।

'अहिंसया एव मानवः उत्तमः मानवः भूत्वा बुद्धत्वं प्राप्नोति । इन्द्रियनिग्रहपूर्वकं रागद्वेषादीन् दूरीकृत्य सुखदुःखनिग्रहपूर्वकं पृथग्भूय सः बुद्धत्वपदम् अधिरोहति । यथा एकः दीपः अन्यं दीपं ज्वालयन् लोकं प्रकाशयति, तथैव एकः बुद्धत्वं प्राप्य जगतः अन्धकारं निवारयितुम् अर्हति । अतः सर्वैः रागद्वेषादयः निग्रहणीयाः । सुखानि दुःखानि च समभावेन द्रष्टव्यानि । जगतः उद्धारः न हि सामान्यं कार्यम् । एकेन द्वाभ्यां वा एतत् कार्यं कर्तुं न शक्यते । व्यापकतया एतत् कार्यं यथा प्रचलेत् तथा प्रयत्नः करणीयः । समग्रे समाजे परिवर्तनम् आनेतव्यम्' इति जनान् अबोधयत् सः ।

गौतमबुद्धः यत् ज्ञानं प्राप्तवान् तस्य प्रसारं कर्तुम् आरब्धवान् । पूर्वं यैः तस्य उपहासः कृतः ते अपि तस्य अनुयायिनः सञ्जाताः । तस्य अनुयायिनां सङ्ख्या दिने दिने अवर्धत ।

बुद्धः जगति धर्मजागरणं कृतवान् । सामान्याः अपि तत्त्वं यथा जानीयुः तथा जीवनसूत्राणां प्रचारं कृतवान् ।

बुद्धस्य तत्त्वस्य सारं ज्ञात्वा सहस्रशः जनाः तदीयं शिष्यत्वम् अङ्गीकृतवन्तः । सर्वप्राधान्येन अहिंसातत्त्वं बोधयन् बुद्धः समग्रे देशे सञ्चारं कृतवान् । तस्मिन् अवसरे मगधचक्रवर्ती बिम्बसारः बुद्धोपदेशेन प्रेरितः सन् प्राणिबलिपूर्वकं क्रियमाणं यज्ञं स्थगितवान् ।

स्वकीयं मुकुटं बुद्धस्य चरणतले समर्प्य प्रजाहितार्थं बौद्धमतम् आश्रितवान् । स्वदेशे अपि बौद्धमताहिंसातत्त्वयोः प्रसारं कृतवान् ।

बुद्धस्य उपदेशाः सिद्धान्ताः सूत्राणि च बौद्धमतस्य सारभूतानि जातानि । बुद्धानुयायिनः बौद्धाः इति विख्याताः । तैले पतितः जलबिन्दुः इव बौद्धमतं समग्रे जगति प्रसृतम् अभवत् । भारतात् निर्गताः बौद्धमतप्रचारकाः विदेशान् गत्वा बौद्धमतस्य प्रतिपादनं प्रसारं च कृतवन्तः । एतेन विदेशेषु अपि असङ्ख्याः जनाः बौद्धमतम् अवलम्बितवन्तः ।

बुद्धः अज्ञानान्धकारे निमग्नस्य जगतः मार्गदर्शकज्योतिः अभवत् । अहिंसायाः प्रतीकं धर्मचक्रं सञ्चालयन् शान्तिं सर्वत्र प्रसारयन् एषः धर्मचक्रवर्ती सञ्जातः ।

बुद्धः स्वजीवितकाले विविधेषु देशेषु बौद्धसङ्घानां स्थापनं कृतवान् । सेवाधर्मस्य प्रचारं च कृतवान् । सर्वे बौद्धसंन्यासिनः समाजसेवकाः सन्तः सामान्यजनानां जीवनेषु परिवर्तनम् आनीतवन्तः । सामान्यान् अपि स्नेहेन पश्यन्तः ते संस्कारप्रधानस्य शिक्षणस्य प्रसारं कृतवन्तः । बुद्धस्य देशाटनावसरे अनेके राजानः तस्य धार्मिकं आधिपत्यम् अङ्गीकृत्य स्वीयानि मुकुटानि बुद्धस्य पदतले अर्पितवन्तः । बुद्धं चक्रवर्तिनां चक्रवर्तिनं मन्यमानाः ते तस्य आदेशानुसारं शासनं कृतवन्तः । राज्यपालनावसरे ते अहिंसां दयां च अवलम्बितवन्तः । जातिभेदम् अपरिगणयन्तः बौद्धधर्मं सर्वेषु राज्येषु जनाः अङ्गीकृतवन्तः ।

तदीये जीवितकाले एव पण्डिताः, पामराः, ज्ञानिनः, राजानः, चक्रवर्तिनः च तं बुद्धं भगवतः अवतारं मन्यन्ते स्म । किन्तु बुद्धः जनानाम् आराधनं न इच्छति स्म । सः सर्वदा प्रतिपादयति स्म यत् श्रेष्ठेन सत्कर्मणा एव मानवः निर्वाणं प्राप्तुम् अर्हति, न तु भक्तेः आराधनतः वा इति ।



षण्णां वर्षाणाम् अनन्तरं बुद्धः कपिलवस्तुनगरं प्रति प्रस्थितवान् ।

बुद्धस्य आगमनवार्ता समग्रे नगरे व्याप्ता । एतेन जनाः नवोत्साहम्, असीमम् आनन्दं च प्राप्तवन्तः । बुद्धस्य स्वागतार्थं सन्नाहः विशेषतः आरब्धः । बुद्धस्य दर्शनं प्राप्तुं जनाः कुतूहलिनः आसन् ।

नगरे सर्वत्र तोरणानि निर्मितानि । समग्रे नगरे नवोत्साहः उत्पन्नः । जनाः अहोरात्रं कार्यं कुर्वन्तः नगरम् अलङ्कृतवन्तः । स्त्रियः अपि गृहस्य पुरतः रङ्गवल्लीं लिखन्त्यः नीराजनार्थं सिद्धतां कुर्वत्यः आसन् ।

बुद्धनाम्ना ख्यातः मम पुत्रः प्रत्यागमिष्यति इति चिन्तयन् शुद्धोदनः अपि सन्तुष्टः । सः अवर्णनीये महानन्दसागरे निमग्नः ।

''अम्ब ! श्रुता खलु वार्ता ? पिता आगमिष्यति । मदीयः पिता आगमिष्यति'' इति राहुलः उत्साहेन मातरं निवेदितवान् । एषः राहुलः इदानीं षड्वर्षीयः बालकः ।

''आं, पुत्र ! भवदीयः पिता भिक्षुः भूत्वा अत्र आगमिष्यति । चक्रवर्तिने तस्मै अस्माभिः भिक्षा दातव्या'' इति उक्तवती यशोधरा ।

''किं मम पिता चक्रवर्ती अस्ति ? अहं चक्रवर्तिनः पुत्रः किम् ?'' इति कुतूहलेन पृष्टवान् राहुलः ।

तदा यशोधरा उक्तवती - ''आम् ! सः समग्रस्य जगतः चक्रवर्ती अस्ति'' इति ।

''एवं तर्हि एतत् भवननगरादिकं सर्वम् अपि तदीयम् एव'' इति अवदत् राहुलः ।

''सत्यम् । किन्तु भवदीयः पिता एतत् सर्वं न इच्छति । वैभवेन सः तृप्तिं न प्राप्तवान् । अतः सर्वं परित्यज्य सः गतवान् । तस्य आदेशानुसारम् आचरणम् एव इदानीं अस्माभिः दातव्या भिक्षा । एतत् एव इदानीं उचितम्'' इति उक्तवती यशोधरा ।

''अम्ब ! तथैव करवाम वयम् । अहं पितुः आदेशं परिपालयिष्यामि । तम् अनुसरामि अपि । पिता येन मार्गेण गतः तम् एव मार्गम् अहम् अपि निश्चयेन अनुसरिष्यामि'' इति उक्तवान् राहुलः ।

एतत् श्रुत्वा आनन्दाश्रूणि विमुञ्चन्ती यशोधरा पुत्रं प्रीत्या आलिङ्गितवती । ''पुत्रः पितुः मार्गम् अनुसरति'' इत्येतस्मात् अपि सन्तोषजनकं किम् अन्यत् स्यात् तस्याः ?





# स्वावलम्बनम्

रामशर्मा सोमगुप्तः च सखायौ । तौ उभौ अपि दरिद्रौ । अतः कदाचित् तौ धनार्जनं कर्तुं स्वग्रामतः प्रस्थितौ । बहुदूरं गतौ तौ अतीव श्रान्तौ जातौ । मध्येमार्गं कस्यचन मुनेः आश्रमः ताभ्यां दृष्टः । तौ तस्य अन्तः गतवन्तौ ।

मुनिः तयोः आगमनकारणं ज्ञात्वा तौ बोधितवान् - ''पुत्रौ ! भवतोः अन्यतरः ब्राह्मणः अस्ति । ब्राह्मणः धनमोहे निमग्नः न भवेत् । सः ज्ञानार्जने निरतः सन् विद्यादानं कुर्यात् । भवतोः अपरः वैश्यः । सः मत्तः वाणिज्यव्यवहारान् ज्ञात्वा तेन धनार्जनं कर्तुम् अर्हति । किन्तु वैश्यस्य धनार्जनमात्रमेव कार्यं न भवेत् । सः जनतायाः सेवायाम् अपि निरतः भवेत् । अनेन सः यशः प्राप्नोति'' इति ।

मुनेः सूचनानुगुणं तौ उभौ अपि वर्षत्रयं तत्रैव विद्याभ्यासं कृतवन्तौ । रामशर्मा अनेकेषु शास्त्रेषु पाण्डित्यं प्राप्तवान् । सोमगुप्तः अपि वाणिज्यविषये स्थितानि रहस्यानि ज्ञातवान् । ततः रामशर्मा स्वीयेन पाण्डित्येन राजास्थाने उद्योगं लब्धवान् । सोमगुप्तः अपि वाणिज्ये उत्तमं स्थानं प्राप्तवान् । एवं पञ्चसु वर्षेषु तौ उभौ अपि धनिकेषु अन्यतमत्वेन परिगणितौ जातौ ।

बहूनि वर्षाणि अतीतानि ! रामशर्मणः पुत्रः कृष्णशर्मा प्रौढः अभवत् । किन्तु पुत्रस्य विषये पितुः महती चिन्ता उत्पन्ना । यतः सः पुत्रः अनुक्तग्राही । सर्वदा क्रीडायाम् अटने च निरतः सः पठने अनासक्तः । रामशर्मा तु महान्तं प्रयत्नं कृतवान् पुत्रं विद्यावन्तं कर्तुम् । किन्तु तस्य प्रयत्नः विफलः एव अभवत् । एवं स्थिते काचन अनूह्या घटना संवृत्ता ।

कदाचित् रामशर्मा विद्यार्थिनः कञ्चित् श्लोकं पाठयति स्म । स श्लोकः क्लिष्टः आसीत् इति कारणात् विद्यार्थिनः तस्य तात्पर्यं शीघ्रं न गृहीतवन्तः । बहुवारं श्लोकपाठनेनापि

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



विद्यार्थिभिः तस्य अर्थः न ज्ञातः एव । तेन श्रान्तः सन् रामशर्मा विश्रामाय गृहाभ्यन्तरं गतः ।

विद्यार्थिनः बोधयितुं पित्रा रामशर्मणा क्रियमाणं परिश्रमं कृष्णशर्मा अवलोकितवान् । पिता श्रान्तः सन् यदा गृहाभ्यन्तरं गतः तदा कृष्णशर्मा आगत्य पितुः आसने उपविश्य विद्यार्थिनां पाठनम् आरब्धवान् । यस्य श्लोकस्य पाठनेन रामशर्मा नितरां श्रान्तः, तमेव श्लोकं कृष्णशर्मा सलीलं बोधितवान् । विद्यार्थिनः कृष्णशर्मणः बोधनेन सुलभतया एव तस्य तात्पर्यं ज्ञातवन्तः ।

गृहे उपविश्य एव रामशर्मा एतं चमत्कारं दृष्ट्वा नितराम् आश्चर्यचकितः । तेन चिन्तितं यत् मम पुत्रः न मूर्खः इति । 'मम पुत्रे स्थिता स्मरणशक्तिः अन्यादृशी । सः कठिनानि अपि शास्त्राणि सुलभतया प्राप्तुं शक्नोति' इति मत्वा सः पुत्रं स्वाभिप्रायम् अवगमितवान् । किन्तु तदा पुत्रेण पृष्टं – ''विद्याभ्यासः किमर्थं करणीयः ?'' इति ।

''सर्वेषाम् आदरं गौरवं च विद्यया एव प्राप्स्यते । धनार्जनाय अपि विद्या एव आवश्यकी'' इति उक्तवान् पिता रामशर्मा ।

''जनाः इदानीमपि मां सगौरवं सादरं च पश्यन्ति । यतः अहं पण्डितस्य पुत्रः अस्मि । ब्राह्मणः अस्मि इत्यतः जनैः पूजापि क्रियते । अहं धनिकस्य भवतः पुत्रः अस्मि अपि । अतः धनार्जनं किमर्थं करणीयं मया ?'' इति कृष्णशर्मा पितरं पृष्टवान् ।

पुत्रस्य एतादृशेन विचारेण रामशर्मा किमपि वक्तुं समर्थः नाभवत् । अस्याम् एव चिन्तायां सः मग्नः जातः । तस्मिन् एव समये मित्रं सोमगुप्तः तदीयं गृहं प्रति आगतः । मित्रस्य आगमनात् रामशर्मणः मनसः किञ्चित् सन्तोषः जातः । किन्तु सोमगुप्तस्य कथनेन ज्ञानं यत् सोमगुप्तस्य पुत्रः वसुगुप्तः अपि रामशर्मणः पुत्रः इव पितरम् – 'अहं धनिकस्य पुत्रः अस्मि । मया किमर्थं धनार्जनं करणीयम्' इति पृच्छति इति ।

समानपरिस्थितौ स्थितयोः तयोः चिन्ता इदानीं तस्याः समस्यायाः परिहारे प्रवृत्ता । तौ उभौ अपि कञ्चित् उपायं चिन्तितवन्तौ । तदनुगुणं सोमगुप्तः पुत्रस्य वसुगुप्तस्य वसतिं रामगुप्तगृहे कल्पयित्वा वाणिज्यार्थं देशान्तरं गतः पत्न्या सह । गमनात् पूर्वं सेवकद्वयं पुत्रस्य रक्षणे नियोजितवान् सः ।

ततः गच्छता कालेन कृष्णशर्मवसुगुप्तयोः

महती मैत्री उत्पन्ना । मासद्वयम् अतीतम् ।

एकस्मिन् दिने रामशर्मा वसुगुप्तम् आहूय उक्तवान् - ''भवतः पिता धनं प्रेषयितुं पत्रं लिखितवान् । अतः आपणं विक्रीय भवान् पित्रे धनं प्रेषयतु'' इति । किन्तु वसुगुप्तः तद्विषये अवधानमेव न दत्तवान् ।

पुनरेकः मासः अतीतः । वसुगुप्तस्य समीपं कश्चन आगत्य काञ्चन आघातकरीं वार्तां श्रावितवान् - ''भवतः पितुः सोमगुप्तस्य नौका जले निमग्ना । नौकास्थः भवतः पिता अपि सपत्नीकः जले निमग्नः । तदीया सकला सम्पदपि विनष्टा । महता प्रयत्नेन तौ वयं तीरं प्रति आनीतवन्तः । किन्तु दौर्भाग्येण तौ सजीवं न स्थितौ'' इति ।



एतां वार्तां श्रुत्वा वसुगुप्तः रोदनम् आरब्धवान् । रामशर्मा तस्य सान्त्वनं कृत्वा उक्तवान् - ''वत्स ! आर्थिकी दुर्गतिः मां बाधते । अतः मया अप्रियम् अपि किञ्चित् वक्तव्यम् एव । अहं भवतः पिता इव न वणिक् । अतः भवतः पालनं कर्तुम् अहं न शक्नोमि । इतः परं भवता स्वस्य जीवनं स्वयमेव निर्वोढव्यम्'' इति ।

एतत् वचनं वसुगुप्ते कोपम् अजनयत् । कोपेन एव सः रामशर्मणः गृहात् प्रस्थितः । किन्तु कुत्रापि तेन स्थलं न लब्धम् । बुभुक्षया पीडितः सः अगतिकः सन् पुनः रामशर्मणः गृहम् आगत्य - 'भोक्तुं किमपि ददातु' इति रामशर्माणं प्रार्थितवान् । रामशर्मणा भोजनव्यवस्थां कृत्वा उक्तं यत् बहूनि दिनानि अहम् एतां व्यवस्थां कर्तुं न शक्नोमि इति ।

पितुः वचनं श्रुत्वा कृष्णशर्मा कुपितः । सः पितुः समीपम् आगत्य - ''भवतः मित्रस्य पुत्रः अस्ति वसुगुप्तः । तस्य रक्षणं भवतः दायित्वं नास्ति किम् ?'' इति पृष्टवान् ।

''सोमगुप्तः मम मित्रम् । यदि सः आपदि मग्नः स्यात् तर्हि अहं निश्चयेन तस्य साहाय्यं कुर्याम् एव । किन्तु वसुगुप्तविषये मम किमपि दायित्वं नास्ति'' इति उक्तवान् रामशर्मा ।

''वसुगुप्तविषये भवतः दायित्वं न स्यात् । किन्तु सः मम मित्रम् अस्ति । मम मित्रस्य विषये अस्माकं गृहे आदरः भवेत् एव'' इति उक्तवान् कृष्णशर्मा ।

''एवं वक्तुं भवतः अधिकारः कः ?'' इति तिरस्कारेण पृष्टवान् रामशर्मा ।

''भगवतः पूजा क्रियते इति कारणेनैव अर्चकोऽपि भगवान् इव पूज्यते जनैः । तथैव अहमपि महापाण्डितस्य रामशर्मणः पुत्रः

अस्मि । एतदेव मम अधिकारं न द्योतयति किम् ?'' इति पृष्टवान् कृष्णशर्मा ।

रामशर्मा क्षणं विचिन्त्य उक्तवान् - ''अहम् अग्रे भवते योग्यम् उत्तरं दास्यामि । इदानीं मया उच्यमानं कार्यं भवान् करोतु । वसुगुप्तस्य सेवकौ आहूय वसुगुप्तस्य सेवां कर्तुं तौ वदतु । अनन्तरं यत् प्रवृत्तं तत् मां सूचयतु'' इति ।

कृष्णशर्मा सोत्साहं तत् कार्यं कर्तुं धावितवान् ! तौ सेवकौ एतावत्पर्यन्तं धनेन विनैव सेवां कुरुतः स्म । किन्तु इदानीं वसुगुप्तस्य विषये तिरस्कारवचनानि उक्त्वा - ''इतःपरं दरिद्रस्य वसुगुप्तस्य सेवां कर्तुम् आवां न सिद्धौ'' इति तौ उक्तवन्तौ कृष्णशर्माणम् । अनेन उत्तरेण आश्चर्यचकितः कृष्णशर्मा आगत्य पितरं प्रवृत्तं सर्वं श्रावितवान् ।

तदा रामशर्मा विहस्य उक्तवान् - ''तयोः वचनं सत्यमेव । इदानीं वसुगुप्तस्य किमपि व्यक्तित्वमेव नास्ति । पितुः सान्निध्येनैव तस्मिन् गौरवम् उत्पन्नम् आसीत् । पितुः धनमेव अत्र कारणम् । धनरहितः वसुगुप्तः इदानीं सामान्यजनत्वेन परिगणितः जातः । भवान् अपि मम पाण्डित्यात् आदरं प्राप्नुवन् अस्ति ! मम सम्पत्तिस्तु पाण्डित्यमेव । सा सम्पत् यदि भवति न भवति तर्हि भवानपि वसुगुप्तः इव अग्रे कष्टम् अनुभविष्यति । स्वेन आर्जितेन धनादिना एव गौरवं सम्पादनीयम्, न तु अन्येन आर्जितेन धनादिना । स्वार्जितं सर्वदा स्वाधीनं स्थास्यति'' इति ।

तदा कृष्णशर्मा क्षणकालं विचिन्त्य - 'स्वावलम्बनम् अवश्यमेव स्यात् मानवे । स्वावलम्बनकारणात् एव भवान् मित्रस्य साहाय्यम् आचरितुं समर्थः । अहं तु मम मित्रस्य साहाय्यं कर्तुम् असमर्थः अस्मि'' इति उक्तवान् ।

''भवान् स्वीयेन मित्रेण सह मया उक्ते स्थले कानिचन वर्षाणि उषित्वा विद्याभ्यासं करोतु'' इति पुत्रम् उक्त्वा रामशर्मणा स्वेन यत्र अधीतं तम् आश्रमं प्रति पुत्रः तत्सुहृत् च प्रेषितौ । कृष्णशर्मा वसुगुप्तश्च वर्षद्वयं तस्मिन् मुनेः आश्रमे विद्याम् अधीत्य प्रत्यागतौ । वस्तुतः वसुगुप्तस्य पिता न मृतः । अपि तु इतोऽपि आढ्यतरः एव जातः आसीत् सः ।

'एतत् सर्वम् आवां बोधयितुं पितृभ्यां कृतं नाटकम्' इति कृष्णशर्मा वसुगुप्तश्च ज्ञातवन्तौ ।



# आर्यः

26

## अज्ञातराजकुमारस्य रहस्यम्

वीरसिंहः सेनापतिः च शान्तिपुरीयस्य प्राचीन-निधेः समीपं रात्रौ गत्वा निश्चितवन्तौ यत् निधिं नेतुं श्वः आगन्तव्यम् इति । वसन्तः आर्यः च कैश्चित् स्वयंसेवकैः सह आगत्य रक्षकभटौ बद्ध्वा मूर्च्छितौ कृत्वा निधिं स्वीकृत्य गच्छतः । वीरसिंहः जव्वरसिंहः च निधिम् अप्राप्य आश्चर्यान्वितौ भवतः । बाणद्वारा प्रेषितं किञ्चन पत्रं सन्देशं ददाति यत् एषः निधिः प्रजानाम् इति । राजकुमारेण आर्येण सः सन्देशः प्रेषितः इति ज्ञायते ।

चित्रम् - गान्धि-अय्यः




















वसन्तेन प्रेषितः स्वयंसेवकः जयानन्देन मिलति ।
कः सन्देशः आनीतः अस्ति मनोहर ?
बीरसिंहः श्वः अमृतपुरस्य आक्रमणाय प्रतिष्ठते इति श्रूयते ।
किम् एतत् सत्यम् ? आर्य ! रोद्धव्यम् एतत् ।
अस्मदीयाः शान्तिपुरं प्राप्तवन्तः सन्ति ।
बसन्तः कुत्र अस्ति ?
सः एव आर्यम् आनेतुं मां प्रेषितवान् आर्यः नाम कः ?
एषः एव आर्यः
एषः मां नेतुम् उपस्थितः अस्ति । एतेन सह गमनाय कृपया अनुज्ञा दीयताम् ।
अपहर्तृणाम् अत्याचारिणां च कपिमुष्टितः राज्यं रक्षणीयम् एव ।
माता कनकदुर्गा भक्तस्य रक्षणं करिष्यति आर्य ! विजयी भव ! यशस्वी भव !
भवतः आशीर्वादः मां रक्षिष्यति ।
जयानन्दः आर्यमनोहरयोः निर्गमनं पश्यन् आसीत् । तावता तत्र शुकी उपस्थिता ।
किं भवत्या मम सन्देशः प्रापितः ?

शुकी मुनेः स्कन्धे उपविशति ।
किं दलपतिः उपस्थितः ?
दलपतिः सुखदेवः तत्र उपस्थितः भवति ।
श्रीमन् ! उपस्थितः अस्मि
अन्तः आगम्यताम् । काचित् विशेषवार्ता अस्ति ।
आर्यः वसन्तः च वीरसिंहेन क्रियमाणं निधेः अपहरणम् अवरूद्धवन्तौ स्तः । वीरसिंहः चिन्तयति यत् सः निधिः विद्रोहिणाम् अधीनः अस्ति इति ।
तस्य योजना का ? आर्यः कुत्र गतः ?
वीरसिंहः विद्रोहिणां निग्रहाय अमृतपुरम् आक्रान्तुम् उद्युक्तः दृश्यते । वसन्तः तदनुयायिनः स्वयं-सेवकाः च एतावता एव शान्तिपुरं प्राप्तवन्तः सन्ति । आर्यः नेतृत्वं वहतु इति तेषाम् इच्छा ।
तर्हि युद्धं निश्चितम् ।
मुनिः अकस्मात् ध्याने मग्नः भवति ।
किम् आर्यः विजयी भवेत् ?
दलपतिः निर्गमनाय उद्युक्तः भवति ।
आर्यविषये चिन्ता मास्तु भवतः । यदा वीरसिंहः निर्गच्छति तदा भवान् ससैन्यं गत्वा राजभवनं चतसृषु दिक्षु आक्रामतु ।
तथैव करिष्यामि श्रीमन् ! राजकुमारीयं तायकं स्मरति खलु भवान् ?
तत् आर्याय कदा अर्पणीयम् अस्माभिः ?
योग्ये काले । तद्दिनं दूरे नास्ति यस्मिन् च आर्यः आत्मना प्राप्तव्यं सर्वं प्राप्नुयात् ।


श्रीमन् ! सुकन्या सदा राजकुमारस्य मङ्गलम् एव आशंसन्ती तिष्ठति ।
सा कुत्रचित् भवेत् चेदपि राजकुमारः तस्याः रक्षणं करिष्यति ।


मुनिः सुखदेवं प्रेषयति ।
मया यत् उक्तं तत् न विस्मर्तव्यम् ।
अहमवश्यं राजभवनम् अधीनी-करिष्यामि ।


आर्यः वसन्तसमीपं नीयते ।
अहम् उपस्थितः वसन्त !
वयं महता औत्सुक्येन भवतः आगमनस्य प्रतीक्षां कुर्वन्तः स्मः आर्य !


वीरसिंहः तत्सैनिकाः च नदीक्रमणं निवारयितुम् इच्छन्तः एतेन मार्गेण आगच्छन्तः सन्ति ।
अस्माभिः वीरसिंहः सैनिकेभ्यः पृथक् करणीयः आदौ ।


कश्चन स्वयंसेवकः तत्र आगच्छति ।
वसन्त ! मया इदानीमेव पादध्वनिः श्रुतः । सैनिकाः पर्वतखातसमीपम् आगताः सन्ति ।
वयं तत्रैव तान् सम्मुखीकरवाम ।
खातप्रदेशे सज्जैः स्थातव्यम् इति अस्मदीयान् सूचयतु ।


स्वयंसेवकाः स्वीये स्वीये स्थाने यथा तिष्ठेयुः तथा वसन्तः आर्यश्च व्यवस्थां कुरुतः ।
वसन्त ! आवाम् इदानीं गच्छाव ।
अहं सन्नद्धः अस्मि मित्र !
अनुवर्तते

अस्मद्देशीयानि अपूर्वाणि भवनानि

# दिल्लीस्थं रक्तदुर्गम्



अस्माकं देशस्य प्रसिद्धासु भवन-रचनासु देहलीस्थं रक्तदुर्गम् अस्ति प्रमुखम् । एतत् मोगलनां वैभवस्य द्योतकम् अस्ति । शाहजहानः एतस्य निर्माणं कारितवान् । १६३९ तमे वर्षे एतस्य निर्माणकार्यम् आरब्धम् । नवानां वर्षाणाम् अनन्तरं, तन्नाम १६४८ तमे वर्षे, शाहजहानः महता वैभवेन एतत् दुर्गं प्रविष्टवान् वासाय ।

रक्तदुर्गस्य प्रवेशद्वारद्वयम् अस्ति । पश्चिमीयेन मार्गेण जनाः प्रविशन्ति । लाहोरद्वारम् इति एतस्य नाम । राजभवनस्य मुखद्वारे भेरीगृहम् अस्ति । एतत् शिलया सिकताभिः च निर्मितं भवनम् । एतस्य अभिमुखम् एकत्र 'हरिततृणाङ्गणम्' (लान्) अस्ति, अपरत्र आस्थानभवनम् अस्ति ।

आस्थानभवनस्य पूर्वभागे सिंहासनं भवति स्म पूर्वम् । आस्थानभवनस्य पृष्ठभागे रङ्गमन्दिरस्य मध्ये सङ्गमरमरशिलया निर्मितः कुण्डः भवति । एतस्य अधोभागः पद्माकारेण रमणीयतया निर्मितः अस्ति । रङ्गमन्दिरस्य पार्श्वे ममताजमन्दिरम् अस्ति । एतत् काचकमन्दिरम् इत्यपि निर्दिश्यते । रङ्गमन्दिरस्य उत्तरस्यां दिशि 'महिलाखास'भवनम् अस्ति । एतस्य भवनस्य पार्श्वे एव किञ्चन गोलभवनम् अस्ति । इतः उत्तरस्यां दिशि गतं चेत् आन्तरङ्गिकभवनं प्राप्यते । गजत्रसिद्धं मयूरसिंहासनम् अत्रैव भवति स्म ।

आन्तरङ्गिकभवनस्य उत्तरभागे राजपरिवारीयाणां स्नानगृहाणि दृश्यन्ते । स्नानगृहाणां पार्श्वे एव 'मोतीमसजिद्' अस्ति । औरङ्गजेबः एतत् सङ्गमरमरशिलया निर्मापितवान् । एतस्य अन्यस्मिन् पार्श्वे उद्यानं, सरोवरः च दृश्येते । तौ उभयतः सङ्गमरमरमण्डपे दृश्येते । उद्यानस्य मध्ये एव द्वितीयेन बहादुरशाहेन गते शतके सिकताभिः शिलाभिः च निर्मापितं भवनं दृश्यते ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थं विज्ञानम्

### उष्णोत्सानाम् अपूर्वता

भूमेः गर्भे द्रवावस्थः लावारसः तिष्ठति । एषः अत्युष्णोपेतः भवति । कदाचित् शिला-फलकानां मध्ये स्थितानां विभेदानां मार्गेण जलं भूगर्भस्तरं प्राप्नोति । तदा जलम् अपि अत्युष्णं भवति । तस्य औष्ण्यं १५० डिग्रीमितं भवति । क्वथनस्तरस्य यत् औष्ण्यं भवेत् तत् अपि अतिशेते एतत् । नितरां तप्तं तत् जलं भूमौ स्थितानां विभेदानां मार्गेण भूमेः ऊर्ध्वतलं विभिद्य बहिः निस्सरति । एषः एव उच्यते – 'उष्णोत्सः' इति । आकाशं स्पृशन्त्याः तस्याः जलधारायाः दृश्यं तु अपूर्वं भवति ।



## भवतां परिसरः

### वृष्टिजलं भवेत् पानजलमूलम्



भूमौ स्थिताः नैसर्गिकाः अंशाः अत्यधिकतया उपयुज्यमानाः सन्ति । तस्मात् तेषां प्राप्तिः विरला जायमाना अस्ति । एतेषु शुद्धं पानजलम् अपि अन्यतमम् । वृष्टिजलं यदि योग्येन क्रमेण सङ्गृह्येत तर्हि ग्रीष्मकाले तदेव पानजलस्य आकरः भवेत् इति किं भवन्तः जानन्ति ? एषु दिनेषु वृष्टिजलसञ्चयस्य विषये अधिकम् अवधानं दीयमानं दृश्यते । भूमौ महागर्तं निर्माय वृष्टिजलं सङ्ग्रहीतुं शक्यम् । एतस्मात् लाभद्वयम् – वृष्टिजलसङ्ग्रहः, भूमिस्थस्य जलस्तरस्य वर्धनं चेति । राजस्थानराज्यस्य किशोरीग्रामस्य जनाः भूमौ तत्र तत्र लघुबन्धानां निर्माणं कृत्वा वृष्टिजलस्य सङ्ग्रहाय विशेषप्रयासं कुर्वन्तः सन्ति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### सस्यानाम् आत्मरक्षणक्रमः

द्रव्येषु सचेतनानि अचेतनानि चेति विज्ञानपुस्तकेषु द्वैविध्यं कल्प्यते । सस्यानि सचेतनेषु अन्तर्भवन्ति इति वयं जानीमः एव । प्रसिद्धः सस्यशास्त्रज्ञः जगदीशचन्द्रबोसवर्यः सप्रमाणं निरूपितवान् अस्ति यत् सस्यानि अपि परिसरानुगुणं स्पन्दन्ते इति ।

एषु दिनेषु क्योटोविश्वविद्यालयस्य विज्ञानिनः अपरम् अंशं प्रमाणीकृतवन्तः सन्ति । स च - सस्यानि परस्परं 'भाषन्ते' इति । यदा विपत्तिः उपस्थिता भवति तदा समीपस्थाय सस्याय तैः सन्देशः प्रेष्यते ।

एतत् सन्देशप्रेषणं विविधैः प्रकारैः



सम्भवति । कानिचन सस्यानि रासायनिकसद्रव्यद्वारा सन्देशं प्रेषयन्ति । एतं प्राप्तवन्ति तत्परिसरस्थानि अन्यानि सस्यानि अवगच्छन्ति यत् अस्माभिः रक्षणोपायः चिन्तनीयः इति । विषांशोत्पादनद्वारा कण्टकादिद्वारा च सस्यानि आत्मरक्षणं चिन्तयन्ति ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### एतस्मिन् मासे वयम् ऐतिहासिकान् जनान् घटनाः च स्मराम ।



१. अकबरः सिंहासनारोहणसमये किंवर्षदेशीयः आसीत् ?

२. चन्द्रगुप्तविक्रमादित्यः यदा शास्ति स्म तदा (क्रि.श. ३७५ - ४१३) कः चीनायात्रिकः भारते प्रवासं कृतवान् ?



३. शिवाजीजीवने अत्यधिकप्रभावं जनितवन्तौ कौ ?

४. महम्मदगझनी कस्मिन् वर्षे सोमनाथदेवालयं लुण्ठितवान् ?



५. कलकत्तातः देहलीं प्रति राजधानी नीयते इति घोषणं कदा प्रवृत्तम् ?

६. १६३१ - १६५२ वर्षयोः मध्यकाले किम् अपूर्वं भवनं निर्मितम् ?

*(उत्तराणि ७० तमे पृष्ठे)*

# चित्रशीर्षिकास्पर्धा





KALANIKETAN BALU

अधस्तनं
चित्रद्वयं दृष्ट्वा
परस्परसम्बन्धिना
वाक्यद्वयेन
चित्रशीर्षिकां किं
भवन्तः प्रेषयितुं
शक्नुयुः?



MAHANTESH C. MORABAD

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –

**चन्दमामा (संस्कृतम्) 'अम्बरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





'अगस्ट्' मासस्य शीर्षिकाप्रेषिका

**श्रीमती मीरा रामनाथ**

२ – बि, मैल् स्टोन् अपार्ट्मेण्ट्स्,

१४, श्रीरामनगर सौत् स्ट्रीट्, अलवारपेट्,

**चेन्नै – ६०० ०१८ (त.ना.)**

**प्रत्यक्षानुभवः श्रेयसे**

**प्रत्यक्षरावबोधः प्रेयसे**

## अभिवर्ध्यतां ज्ञानशक्तिः – उत्तराणि

१. चतुर्दशवर्षीयः ।

२. फाहियान् ।

३. माता जीजाबायी, गुरुः समर्थः रामदासः च ।

४. १०२५ तमे क्रिस्ताब्दे ।

५. १८११ तमे वर्षे डिसेम्बर्मासे ।

६. ताजमहल् ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# तैलगाथा-तैलसंस्करणप्रक्रिया



वीणया तस्याः सहपाठिनीभिः च तैलपरिष्करण-संस्थायाः अभियन्त्रा दासवर्येण उच्यमाना तैलगाथा सकुतूहलं श्रूयमाणा आसीत् ।

दासवर्यः अवदत् - ''एतावत्पर्यन्तं मया तैलस्य उपयोगम् इतिहासं च अधिकृत्य विवृतम् । इदानीम् अहं भूमितः तैलं कथं प्राप्यते इति विवृणोमि ।''

सः कथनम् अन्ववर्तयत् - ''आदौ विज्ञानिनः अभियन्तारः च तैलप्राप्तिसम्भावनायुक्तं स्थलम् अभिज्ञाय तत्र भूमेः शिलास्तरस्य च अध्ययनं कुर्वन्ति । यदि तैलप्राप्तिः स्पष्टतया अवगम्यते तर्हि भूमौ रन्ध्रकरणम् आरभ्यते । भूमौ नालानाम् अन्यसाधनानां च प्रेषणाय डेरिक्(Derrick)नामिका रचना सज्जीक्रियते । रन्ध्रादिकं यदा समाप्यते तदा तैलधारा भूमेः ऊर्ध्वतले प्राप्यते ।''

''एवं भूगर्भतः प्राप्तम् असंस्कृतं तैलं नालसाहाय्येन नौकया वा तैलसंस्करणकेन्द्रं प्रति प्रेष्यते । तत्र तैलं संस्क्रियते । असंस्कृते तैले हैड्रोकार्बन्, अन्ये अंशाः च भवन्ति । एतेषां पृथक्करणम् एव संस्करणं नाम । हैड्रोकार्बन्-अंशाः विविधक्वथनबिन्दुयुक्ताः भवन्ति । अतः क्षरणादिप्रक्रियया तदंशयुक्ताः विविधाः पदार्थाः पृथक्क्रियन्ते । एषा संस्करणप्रक्रिया विस्तृता इत्यतः संस्करणागारं सहजतया विशालं स्थलम् अपेक्षते । समग्रे यन्त्रागारे विविधाकाराः नालाः दृश्यन्ते बहुधाः ।''

अन्ते सः सर्वासां मुखं पश्यन् एवम् उपसंहृतवान् - ''बालाः ! तैलसंस्करणं महार्घम् अधिक-समयसापेक्षं च इति अवगतं खलु भवतीभिः ? अतः तैलोत्पन्नानाम् उपयोगविषये अतिजागरूकता वोढव्या अस्माभिः सदापि'' इति ।

